श्री

# मानवधर्म्मशास्त्रम्

भृगुप्रोक्तम्

---

श्रीयुद्ग्येवस्हौटनेन

मुद्रकृतम्

---

लण्डन्राजधान्याम्

मुद्रितम्

---

संवत्

१८८१

॥ ओँ ॥

॥ नमोगणेशाय ॥

॥ मानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायाम्प्रथमोऽध्यायः ॥

---

मनुमेकाग्रमासीनमभिगम्यमहर्षयः ।
प्रतिपूज्ययथान्यायमिदंवचनमब्रुवन् ॥१॥
भगवन्सर्ववर्णानांयथावदनुपूर्वशः ।
अन्तरप्रभवानांचधर्म्मान्नोवक्तुमर्हसि ॥२॥
त्वमेकोह्यस्यसर्वस्यविधानस्यस्वयम्भुवः ।
अचिन्त्यस्याप्रमेयस्यकार्यतत्त्वार्थवित्प्रभो ॥३॥
सतैःपृष्टस्तथासम्यगमितौजामहात्मभिः ।
प्रत्युवाचार्च्यतान्सर्वान्महर्षीञ्छ्रूयतामिति ॥४॥
आसीदिदन्तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयम्प्रसुप्तमिवसर्वतः ॥५॥
ततःस्वयम्भूर्भगवानव्यक्तोव्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाःप्रादुरासीत्तमोनुदः ॥६॥

योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः ।
सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ॥७॥
सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः
अप एव ससर्जादौ तासु बीजमवासृजत् ॥८॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयम्ब्रह्मा सर्वलोकपितामहः ॥९॥
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥१०॥
यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् ।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते ॥११॥
तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम् ।
स्वयमेवात्मनो ध्यानात्तदण्डमकरोद्द्विधा ॥१२॥
ताभ्यां स शकलाभ्यां च दिवम्भूमिं च निर्ममे ।
मध्ये व्योम दिशश्चाष्टावपां स्थानं च शाश्वतम् ॥१३॥
उद्बवर्हात्मनश्चैव मनः सदसदात्मकम्
मनसश्चाप्यहंकारमभिमन्तारमीश्वरम् ॥१४॥
महान्तमेव चात्मानं सर्वाणि त्रिगुणानि च
विषयाणां ग्रहीतॄणि शनैः पंचेन्द्रियाणि च ॥१५॥

तेषान्त्ववयवान्सूक्ष्मान्षण्णामप्यमितौजसाम् ।
सन्निवेश्यात्ममात्रासुसर्वभूतानिनिर्ममे ॥१६॥
यन्मूर्त्यवयवाःसूक्ष्मास्तस्येमान्याश्रयन्तिषट् ।
तस्माच्छरीरमित्याहुस्तस्यमूर्त्तिंमनीषिणः ॥१७॥
तदाविशन्तिभूतानिमहान्तिसहकर्म्मभिः ।
मनश्चावयवैःसूक्ष्मैःसर्वभूतकृदव्ययम् ॥१८॥
तेषामिदन्तुसप्तानाम्पुरुषाणांमहौजसाम् ।
सूक्ष्माभ्योमूर्त्तिमात्राभ्यःसम्भवत्यव्ययाद्व्ययम् ॥१९॥
आद्याद्यस्यगुणन्त्वेषामवाप्नोतिपरःपरः ।
योयोयावतिथश्चैषांससतावद्गुणःस्मृतः ॥२०॥
सर्वेषान्तुसनामानिकर्माणिचपृथक्पृथक् ।
वेदशब्देभ्यएवादौपृथक्संस्थाश्चनिर्ममे ॥२१॥
कर्मात्मनांचदेवानांसोऽसृजत्प्राणिनाम्प्रभुः ।
साध्यानांचगणंसूक्ष्मंयज्ञंचैवसनातनम् ॥२२॥
अग्निवायुरविभ्यस्तुत्रयम्ब्रह्मसनातनम् ।
दुदोहयज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥२३॥
कालंकालविभक्तीश्चनक्षत्राणिग्रहांस्तथा
सरितःसागरान्शैलान्समानिविषमाणिच ॥२४॥

तपोवाचंरतिंचैवकामंचक्रोधमेवच ।
सृष्टिंससर्जचैवेमांस्त्रष्टुमिच्छन्निमाःप्रजाः ॥२५॥
कर्मणांचविवेकार्थंधर्माधर्मौव्यवेचयत् ।
द्वंद्वैरयोजयच्चेमाःसुखदुःखादिभिःप्रजाः ॥२६॥
अण्व्योमात्राविनाशिन्योदशार्द्धानान्तुयाःस्मृताः ।
ताभिःसार्द्धमिदंसर्वंसम्भवत्यनुपूर्वशः ॥२७॥
यन्तुकर्मणियस्मिन्सन्ययुंक्तप्रथमम्प्रभुः ।
सतदेवस्वयम्भेजेसृज्यमानःपुनःपुनः ॥२८॥
हिंस्राहिंस्रेमृदुक्रूरेधर्माधर्मावृतानृते ।
यद्यस्यसोऽदधात्सर्गेतत्तस्यस्वयमाविशेत् ॥२९॥
यथर्तुलिंगान्यृतवःस्वयमेवर्तुपर्यये ।
स्वानिस्वान्यभिपद्यन्तेतथाकर्माणिदेहिनः ॥३०॥
लोकानान्तुविवृद्ध्यर्थंमुखबाहूरुपादतः ।
ब्राह्मणंक्षत्रियंवैश्यंशूद्रंचनिरवर्तयत् ॥३१॥
द्विधाकृत्वात्मनोदेहमर्द्धेनपुरुषोऽभवत् ।
अर्द्धेननारीतस्यांसविराजमसृजत्प्रभुः ॥३२॥
तपस्तप्त्वाऽसृजद्यन्तुसस्वयंपुरुषोविराट् ।
तंमांवित्तास्यसर्वस्यस्त्रष्टारंद्विजसत्तमाः ॥

अहंप्रजाःसिसृक्षुस्तुतपस्तप्त्वासुदुश्चरम् ।
पतीन्प्रजानामसृजंमहर्षीनादितोदश ॥३४॥
मरीचिमत्र्यंगिरसौपुलस्त्यम्पुलहंक्रतुम्
प्रचेतसंवशिष्ठञ्चभृगुन्नारदमेवच ॥३५॥
एतेमनूंस्तुसप्तान्यानसृजन्भूरितेजसः ।
देवान्देवनिकायांश्चमहर्षींश्चामितौजसः ॥३६॥
यक्षरक्षःपिशाचांश्चगंधर्वाप्सरसोऽसुरान् ।
नागान्सर्पान्सुपर्णांश्चपितॄणांचपृथग्गणान् ॥३७॥
विद्युतोऽशनिमेघांश्चरोहितेन्द्रधनूंषिच ।
उल्कानिर्घातकेतूंश्चज्योतींष्युच्चावचानिच ॥३८॥
किन्नरान्वानरान्मत्स्यान्विविधांश्चविहंगमान् ।
पशून्मृगान्मनुष्यांश्चव्यालांश्चोभयतोदतः ॥३९॥
कृमिकीटपतंगांश्चयूकामक्षिकमत्कुणम् ।
सर्वञ्चदंशमशकंस्थावरञ्चपृथग्विधम् ॥४०॥
एवमेतैरिदंसर्वंमन्नियोगान्महात्मभिः ।
यथाकर्मतपोयोगात्सृष्टंस्थावरजंगमम् ॥४१॥
येषांतुयादृशंकर्मभूतानामिहकीर्त्तितम् ।
तत्तथावोऽभिधास्यामिक्रमयोगञ्चजन्मनि ॥४२॥

पशवश्चमृगाश्चैवव्यालाश्चोभयतोदतः ।
रक्षांसिचपिशाचाश्चमनुष्याश्चजरायुजाः ॥४३॥
अण्डजाःपक्षिणःसर्पानक्रामत्स्याश्चकच्छपाः ।
यानिचैवंप्रकाराणिस्थलजान्यौदकानिच ॥४४॥
स्वेदजंदंशमशकंयूकामक्षिकमत्कुणम् ।
उष्मणश्चोपजायन्तेयच्चान्यत्किञ्चिदीदृशम् ॥४५॥
उद्भिज्जाःस्थावराःसर्वेवीजकाण्डप्ररोहिणः ।
ओषध्यःफलपाकान्ताबहुपुष्पफलोपगाः ॥४६॥
अपुष्पाःफलवन्तोयेतेवनस्पतयःस्मृताः ।
पुष्पिणःफलिनश्चैववृक्षास्तूभयतःस्मृताः ॥४७॥
गुच्छगुल्मंतुविविधन्तथैवतृणजातयः ।
वीजकाण्डरुहाण्येवप्रतानावल्ल्यएवच ॥४८॥
तमसाबहुरूपेणवेष्टिताःकर्महेतुना ।
अन्तःसंज्ञाभवन्त्येतेसुखदुःखसमन्विताः ॥४९॥
एतदन्तास्तुगतयोब्रह्माद्याःसमुदाहृताः ।
घोरेऽस्मिन्भूतसंसारेनित्यंसततयायिनि ॥५०॥
एवंसर्वंससृष्ट्वेदंमाञ्चाचिन्त्यपराक्रमः ।
आत्मन्यन्तर्दधेभूयःकालंकालेनपीडयन् ॥५१॥

यदासदेवोजागर्त्तितदेदञ्चेष्टतेजगत् ।
यदास्वपितिशान्तात्मातदासर्वंनिमीलति ॥५२॥
तस्मिन्स्वपतितुसुस्थेकर्मात्मानःशरीरिणः ।
स्वकर्मभ्योनिवर्त्तन्तेमनश्चग्लानिमृच्छति ॥५३॥
युगपत्तुप्रलीयन्तेयदातस्मिन्महात्मनि ।
तदाऽयंसर्वभूतात्मासुखंस्वपितिनिर्वृतः ॥५४॥
तमोऽयन्तुसमाश्रित्यचिरन्तिष्ठतिसेन्द्रियः ।
नचस्वंकुरुतेकर्मतदोत्क्रामतिमूर्त्तितः ॥५५॥
यदाऽणुमात्रिकोभूत्वाबीजंस्थास्नुचरिष्णुच ।
समाविशतिसंसृष्टस्तदामूर्त्तिंविमुञ्चति ॥५६॥
एवंसजाग्रत्स्वप्नाभ्यामिदंसर्वंचराचरम् ।
संजीवयतिचाजस्रम्प्रमापयतिचाव्ययः ॥५७॥
इदंशास्त्रन्तुकृत्वाऽसौमामेवस्वयमादितः ।
विधिवद्ग्राहयामासमरीच्यादींस्त्वहंमुनीन् ॥५८॥
एतद्वोऽयंभृगुःशास्त्रंश्रावयिष्यत्यशेषतः ।
एतद्धिमत्तोऽधिजगेसर्वमेषोऽखिलंमुनिः ॥५९॥
ततस्तथासतेनोक्तोमहर्षिर्मनुनाभृगुः ।
तानब्रवीदृषीन्सर्वान्प्रीतात्माश्रूयतामिति ॥६०॥

स्वायंभुवस्यास्यमनोःषड्वंश्यामनवोऽपरे ।
सृष्टवन्तःप्रजाःस्वाःस्वामहात्मानोमहौजसः ॥६१॥
स्वारोचिषश्चौत्तमिश्चतामसोरैवतस्तथा ।
चाक्षुषश्चमहातेजाविवस्वत्सुतएवच ॥६२॥
स्वायंभुवाद्याःसप्तैतेमनवोभूरितेजसः ।
स्वेस्वेऽन्तरेसर्वमिदमुत्पाद्यापुश्चराचरम् ॥६३॥
निमेषादशचाष्टौचकाष्ठात्रिंशत्तुताःकला ।
त्रिंशत्कलामुहूर्तःस्यादहोरात्रन्तुतावतः ॥६४॥
अहोरात्रेविभजनेसूर्योमानुषदैविके ।
रात्रिःस्वप्नायभूतानाञ्चेष्टायैकर्मणामहः ॥६५॥
पित्र्येरात्र्यहनीमासःप्रविभागस्तुपक्षयोः ।
कर्मचेष्टास्वहःकृष्णःशुक्लःस्वप्नायशर्वरी ॥६६॥
दैवेरात्र्यहनीवर्षंप्रविभागस्तयोःपुनः ।
अहस्तत्रोदगयनंरात्रिःस्याद्दक्षिणायनम् ॥६७॥
ब्राह्मस्यतुक्षपाऽहस्ययत्प्रमाणंसमासतः ।
एकैकशोयुगानान्तुक्रमशस्तन्निबोधत ॥६८॥
चत्वार्याहुःसहस्राणिवर्षाणान्तुकृतंयुगम् ।
तस्यतावच्छतीसंध्यासंध्यांशश्चतथाविधः ॥६९॥

इतरेषुससंध्येषुससंध्यांशेषुचत्रिषु ।
एकापायेनवर्त्तन्तेसहस्राणिशतानिच ॥७०॥
यदेतत्परिसंख्यातमादावेवचतुर्युगम् ।
एतद्द्वादशसाहस्रन्देवानांयुगमुच्यते ॥७१॥
दैविकानांयुगानान्तुसहस्रम्परिसंख्यया ।
ब्राह्ममेकमहर्ज्ञेयन्तावतीरात्रिरेवच ॥७२॥
तद्वैयुगसहस्रान्तम्ब्राह्मम्पुण्यमहर्विदुः ।
रात्रिञ्चतावतीमेवतेऽहोरात्रविदोजनाः ॥७३॥
तस्यसोऽहर्निशस्यान्तेप्रसुप्तःप्रतिबुध्यते ।
प्रतिबुद्धश्चसृजतिमनःसदसदात्मकम् ॥७४॥
मनःसृष्टिंविकुरुतेचोद्यमानंसिसृक्षया ।
आकाशञ्जायतेतस्मात्तस्यशब्दंगुणंविदुः ॥७५॥
आकाशात्तुविकुर्वाणात्सर्वगन्धवहःशुचिः ।
बलवाञ्जायतेवायुःसवैस्पर्शगुणोमतः ॥७६॥
वायोरपिविकुर्वाणाद्विरोचिष्णुतमोनुदम् ।
ज्योतिरुत्पद्यतेभास्वत्तद्रूपगुणमुच्यते ॥७७॥
ज्योतिषश्चविकुर्वाणादापोरसगुणाःस्मृताः ।
अद्भ्योगन्धगुणाभूमिरित्येषासृष्टिरादितः ॥७८॥

यत्प्राग्द्वादशसाहस्रमुदितन्दैविकंयुगम् ।
तदेकसप्ततिगुणम्मन्वन्तरमिहोच्यते ॥७९॥
मन्वन्तराण्यसंख्यानिसर्गःसंहारएवच ।
क्रीडन्निवैतत्कुरुतेपरमेष्ठीपुनःपुनः ॥८०॥
चतुष्पात्सकलोधर्मःसत्यञ्चैवकृतेयुगे ।
नाधर्मेणागमःकश्चिन्मनुष्यान्प्रतिवर्त्तते ॥८१॥
इतरेष्वागमाद्धर्मःपादशस्त्ववरोपितः ।
चौरिकाऽनृतमायाभिर्धर्मश्चापैतिपादशः ॥८२॥
अरोगाःसर्वसिद्धार्थाश्चतुर्वर्षशतायुषः ।
कृतेत्रेतादिषुह्येषामायुर्ह्रसतिपादशः ॥८३॥
वेदोक्तमायुर्मर्त्यानामाशिषश्चैवकर्म्मणाम् ।
फलन्त्यनुयुगंलोकेप्रभावश्चशरीरिणाम् ॥८४॥
अन्येकृतयुगेधर्मास्त्रेतायांद्वापरेपरे ।
अन्येकलियुगेनृणांयुगह्रासानुरूपतः ॥८५॥
तपःपरंकृतयुगेत्रेतायांज्ञानमुच्यते ।
द्वापरेयज्ञमेवाहुर्दानमेकंकलौयुगे ॥८६॥
सर्वस्यास्यतुसर्गस्यगुप्त्यर्थंसमहाद्युतिः ।
मुखबाहूरुपज्जानाम्पृथक्कर्माण्यकल्पयत् ॥८७॥

अध्यापनमध्ययनंयजनंयाजनन्तथा ।
दानम्प्रतिग्रहञ्चैवब्राह्मणानामकल्पयत् ॥८८॥
प्रजानांरक्षणन्दानमिज्याऽध्ययनमेवच ।
विषयेष्वप्रसक्तिश्चक्षत्रियस्यसमासतः ॥८९॥
पशूनांरक्षणन्दानमिज्याऽध्ययनमेवच ।
वणिक्पथंकुसीदञ्चवैश्यस्यकृषिमेवच ॥९०॥
एकमेवतुशुद्रस्यप्रभुःकर्मसमादिशत् ।
एतेषामेववर्णानांशुश्रूषामनसूयया ॥९१॥
ऊर्द्ध्वंनाभेर्मेध्यतरःपुरुषःपरिकीर्त्तितः ।
तस्मान्मेध्यतमन्त्वस्यमुखमुक्तंस्वयम्भुवा ॥९२॥
उत्तमांगोद्भवाज्ज्यैष्ठ्याद्ब्रह्मणश्चैवधारणात् ।
सर्वस्यैवास्यसर्गस्यधर्मतोब्राह्मणःप्रभुः ॥९३॥
तंहिस्वयम्भूःस्वादास्यात्तपस्तप्त्वादितोऽसृजत् ।
हव्यकव्याभिवाह्यायसर्वस्यास्यचगुप्तये ॥९४॥
यस्यास्येनसदाऽश्नन्तिहव्यानित्रिदिवौकसः ।
कव्यानिचैवपितरःकिम्भूतमधिकन्ततः ॥९५॥
भूतानाम्प्राणिनःश्रेष्ठाःप्राणिनांबुद्धिजीविनः ।
बुद्धिमत्सुनराःश्रेष्ठानरेषुब्राह्मणाःस्मृताः ॥९६॥

ब्राह्मणेषुचविद्वांसोविद्वत्सुकृतबुद्धयः । 
कृतबुद्धिषुकर्त्तारःकर्तृषुब्रह्मवेदिनः ॥९७॥
उत्पत्तिरेवविप्रस्यमूर्त्तिर्धर्मस्यशाश्वती ।
सहिधर्मार्थमुत्पन्नोब्रह्मभूयायकल्पते ॥९८॥
ब्राह्मणोजायमानोहिपृथिव्यामधिजायते ।
ईश्वरःसर्वभूतानान्धर्मकोषस्यगुप्तये ॥९९॥
सर्वस्वंब्राह्मणस्येदंयत्किञ्चिज्जगतीगतम् ।
श्रैष्ठ्येनाभिजनेनेदंसर्वंवैब्राह्मणोऽर्हति ॥१००॥
स्वमेवब्राह्मणोभुंक्तेस्वंवस्तेस्वन्ददातिच ।
आनृशंस्याद्ब्राह्मणस्यभुंजतेहीतरेजनाः ॥१०१॥
तस्यकर्मविवेकार्थंशेषाणामनुपूर्वशः ।
स्वायम्भुवोमनुर्धीमानिदंशास्त्रमकल्पयत् ॥१०२॥
विदुषाब्राह्मणेनेदमध्येतव्यम्प्रयत्नतः ।
शिष्येभ्यश्चप्रवक्तव्यंसम्यग्नान्येनकेनचित् ॥१०३॥
इदंशास्त्रमधीयानोब्राह्मणःशंसितव्रतः ।
मनोवाग्देहजैर्नित्यंकर्मदोषैर्नलिप्यते ॥१०४॥
पुनातिपंक्तिंवंश्यांश्चसप्तसप्तपरावरान् ।
पृथिवीमपिचैवेमांकृत्स्नामेकोऽपिसोऽर्हति ॥१०५॥

इदंस्वस्त्ययनंश्रेष्ठमिदम्बुद्धिविवर्द्धनम् ।
इदंयशस्यमायुष्यमिदंनिःश्रेयसम्परम् ॥१०६॥
अस्मिन्धर्मोऽखिलेनोक्तोगुणदोषौचकर्मणाम् ।
चतुर्णामपिवर्णानामाचारश्चैवशाश्वतः ॥१०७॥
आचारःपरमोधर्मःश्रुत्युक्तःस्मार्तएवच ।
तस्मादस्मिन्सदायुक्तोनित्यंस्यादात्मवान्द्विजः ॥१०८॥
आचाराद्विच्युतोविप्रोनवेदफलमश्नुते ।
आचारेणतुसंयुक्तःसम्पूर्णफलभाग्भवेत् ॥१०९॥
एवमाचारतोदृष्ट्वाधर्मस्यमुनयोगतिम् ।
सर्वस्यतपसोमूलमाचारंजगृहुःपरम् ॥११०॥
जगतश्चसमुत्पत्तिंसंस्कारविधिमेवच ।
व्रतचर्य्योपचारंचस्नानस्यचपरंविधिम् ॥१११॥
दाराधिगमनंचैवविवाहानांचलक्षणम् ।
महायज्ञविधानंचश्राद्धकल्पंचशाश्वतम् ॥११२॥
वृत्तीनांलक्षणंचैवस्नातकस्यव्रतानिच ।
भक्ष्याभक्ष्यंचशौचंचद्रव्याणांशुद्धिमेवच ॥११३॥
स्त्रीधर्मयोगंतापस्यंमोक्षंसंन्यासमेवच ।
राज्ञश्चधर्म्ममखिलंकार्य्याणांचविनिर्णयम् ॥११४॥

साक्षिप्रश्नविधानंचधर्मंस्त्रीपुंसयोरपि ।
विभागधर्म्मंद्यूतंचकंटकानांचशोधनम् ॥११५॥
वैश्यशूद्रोपचारंचसंकीर्णानांचसम्भवम् ।
आपद्धर्म्मंचवर्णानाम्प्रायश्चित्तविधिन्तथा ॥११६॥
संसारगमनंचैवत्रिविधंकर्मसम्भवम् ।
निःश्रेयसंकर्म्मणांचगुणदोषपरीक्षणम् ॥११७॥
देशधर्मान्जातिधर्मान्कुलधर्म्मांश्चशाश्वतान् ।
पाषंडगणधर्मांश्चशास्त्रेऽस्मिन्नुक्तवान्मनुः ॥११८॥
यथेदमुक्तवान्शास्त्रम्पुरापृष्टोमनुर्मया ।
तथेदंयूयमप्यद्यमत्सकाशान्निबोधत ॥११९॥

---

॥ इतिमानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायाम् ॥
॥ प्रथमोऽध्यायः ॥

॥ मानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायांद्वितीयोऽध्यायः ॥

विद्वद्भिःसेवितःसद्भिर्नित्यमद्वेषरागिभिः ।
हृदयेनाभ्यनुज्ञातोयोधर्मस्तन्निबोधत ॥१॥
कामात्मतानप्रशस्तानचैवेहास्त्यकामता ।
काम्योहिवेदाधिगमःकर्म्मयोगश्चवैदिकः ॥२॥
संकल्पमूलःकामोवैयज्ञाःसंकलपसम्भवाः ।
व्रतानियमधर्माश्चसर्वेसंकल्पजाःस्मृताः ॥३॥
अकामस्यक्रियाकाचिद्दृश्यतेनेहकर्हिचित् ।
यद्यद्धिकुरुतेकिंचित्तत्तत्कामस्यचेष्टितम् ॥४॥
तेषुसम्यग्वर्त्तमानोगच्छत्यमरलोकताम् ।
यथासंकल्पितांश्चेहसर्वान्कामान्समश्नुते ॥५॥
वेदोऽखिलोधर्ममूलंस्मृतिशीलेचतद्विदाम् ।
आचारश्चैवसाधूनामात्मनस्तुष्टिरेवच ॥६॥
यःकश्चित्कस्यचिद्धर्मोमनुनापरिकीर्त्तितः ।
ससर्वोऽभिहितोवेदेसर्वज्ञानमयोहिसः ॥७॥

सर्वंतुसमवेक्ष्येदन्निखिलंज्ञानचक्षुषा ।
श्रुतिप्रामाण्यतोविद्वान्स्वधर्मेनिविशेत्तवै ॥८॥
श्रुतिस्मृत्युदितन्धर्ममनुतिष्ठन्हिमानवः ।
इहकीर्तिमवाप्नोतिप्रेत्यचानुत्तमंसुखम् ॥९॥
श्रुतिस्तुवेदोविज्ञेयोधर्म्मशास्त्रन्तुवैस्मृतिः ।
तेसर्वार्थेष्वमीमांस्येताभ्यान्धर्मोहिनिर्बभौ ॥१०॥
योऽवमन्येततेमूलेहेतुशास्त्राश्रयाद्द्विजः ।
ससाधुभिर्बहिष्कार्योनास्तिकोवेदनिन्दकः ॥११॥
वेदःस्मृतिःसदाचारःस्वस्यचप्रियमात्मनः ।
एतच्चतुर्विधम्प्राहुःसाक्षाद्धर्मस्यलक्षणम् ॥१२॥
अर्थकामेष्वसक्तानान्धर्मज्ञानंविधीयते ।
धर्मंजिज्ञासमानानाम्प्रमाणम्परमंश्रुतिः ॥१३॥
श्रुतिद्वैधन्तुयत्रस्यात्तत्रधर्म्मावुभौस्मृतौ ।
उभावपिहितौधर्मौसम्यगुक्तौमनीषिभिः ॥१४॥
उदितेऽनुदितेचैवसमयाध्युषितेतथा ।
सर्वथावर्त्ततेयज्ञइतीयंवैदिकीश्रुतिः ॥१५॥
निषेकादिश्मशानान्तोमंत्रैर्यस्योदितोविधिः ।
तस्यशास्त्रेऽधिकारोऽस्मिन्ज्ञेयोनान्यस्यकस्यचित ॥१६॥

सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तन्देवनिर्मितन्देशम्ब्रह्मावर्त्तम्प्रचक्षते ॥१७॥
तस्मिन्देशेयआचारःपारम्पर्यक्रमागतः ।
वर्णानांसान्तरालानांससदाचारउच्यते ॥१८॥
कुरुक्षेत्रंचमत्स्याश्चपंचालाःशूरसेनकाः ।
एषब्रह्मर्षिदेशोवैब्रह्मावर्त्तादनन्तरः ॥१९॥
एतद्देशप्रसूतस्यसकाशादग्रजन्मनः ।
स्वंस्वंचरित्रंशिक्षेरन्पृथिव्यांसर्वमानवाः ॥२०॥
हिमवद्विंध्ययोर्मध्यंयत्प्राग्विनशनादपि ।
प्रत्यगेवप्रयागाच्चमध्यदेशःप्रकीर्त्तितः ॥२१॥
आसमुद्रात्तुवैपूर्वादासमुद्रात्तुपश्चिमात् ।
तयोरेवान्तरंगिर्य्योरार्यावर्त्तंविदुर्बुधाः ॥२२॥
कृष्णसारस्तुचरतिमृगोयत्रस्वभावतः ।
सज्ञेयोयज्ञियोदेशोम्लेच्छदेशस्त्वतःपरः ॥२३॥
एतान्द्विजातयोदेशान्संश्रयेरन्प्रयत्नतः ।
शूद्रस्तुयस्मिन्कस्मिन्वानिवसेद्वृत्तिकर्षितः ॥२४॥
एषाधर्मस्यवोयोनिःसमासेनप्रकीर्त्तिता ।
सम्भवश्चास्यसर्वस्यवर्णधर्मान्निबोधत ॥२५॥

वैदिकैःकर्म्मभिःपुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्य्यःशरीरसंस्कारःपावनःप्रेत्यचेहच ॥२६॥
गार्भैर्होमैर्जातकर्म्मचौडमौंजीनिबन्धनैः ।
वैजिकंगार्भिकंचैनोद्विजानामपमृज्यते ॥२७॥
स्वाध्यायेनव्रतैर्होमैस्त्रैविद्येनेज्ययासुतैः ।
महायज्ञैश्चयज्ञैश्चब्राह्मीयंक्रियतेतनुः ॥२८॥
प्राङ्नाभिवर्द्धनात्पुंसोजातकर्म्मविधीयते ।
मंत्रवत्प्राशनंचास्यहिरण्यमधुसर्पिषाम् ॥२९॥
नामधेयन्दशम्यान्तुद्वादश्यांवाऽस्यकारयेत् ।
पुण्येतिथौमुहूर्त्तेवानक्षत्रेवागुणान्विते ॥३०॥
मंगल्यंब्राह्मणस्यस्यात्क्षत्रियस्यबलान्वितम् ।
वैश्यस्यधनसंयुक्तंशुद्रस्यतुजुगुप्सितम् ॥३१॥
शर्म्मवद्ब्राह्मणस्यस्याद्राज्ञोरक्षासमन्वितम् ।
वैश्यस्यपुष्टिसंयुक्तंशूद्रस्यप्रैष्यसंयुतम् ॥३२॥
स्त्रीणांसुखोद्यमक्रूरंविस्पष्टार्थंमनोहरम् ।
मंगल्यन्दीर्घवर्णान्तमाशीर्वादाभिधानवत् ॥३३॥
चतुर्थेमासिकर्त्तव्यंशिशोर्निष्क्रमणंगृहात् ।
षष्ठेऽन्नप्राशनंमासियद्वेष्टंमंगलंकुले ॥३४॥

चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ।
प्रथमेऽब्दे तृतीयेवा कर्त्तव्यं श्रुतिचोदनात् ॥३५॥
गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥३६॥
ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पंचमे ।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥३७॥
आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्त्तते ।
आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥३८॥
अतऊर्द्ध्वं त्रयोप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥३९॥
नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् ।
ब्राह्मान्यौनांश्च सम्बंधान्नाचरेद्ब्राह्मणः सह ॥४०॥
कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः ।
वसीरन्नानुपूर्वेण शाणक्षौमाविकानि च ॥४१॥
मौंजी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी ॥४२॥
मुंजालाभे तु कर्त्तव्याः कुशाश्मान्तकवल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पंचभिरेव वा ॥४३॥

कार्पासमुपवीतंस्याद्विप्रस्योर्द्धवृतंत्रिवृत् ।
शणसूत्रमयंराज्ञोवैश्यस्याविकसौत्रिकम् ॥४४॥
ब्राह्मणोवैल्वपालाशौक्षत्रियोवाटखादिरौ ।
पैलवौदुम्बरौवैश्योदंडानर्हन्तिधर्मतः ॥४५॥
केशान्तिकोब्राह्मणस्यदंडःकार्यःप्रमाणतः ।
ललाटसंमितोराज्ञःस्यात्तुनासान्तिकोविशः ॥४६॥
ऋजवस्तेतुसर्वेस्युरव्रणाःसौम्यदर्शनाः ।
अनुद्वेगकरानृणांसत्वचोनाग्निदूषिताः ॥४७॥
प्रतिगृह्येप्सितन्दंडमुपस्थायचभास्करम् ।
प्रदक्षिणम्परीत्याग्निंचरेद्भैक्षंयथाविधि ॥४८॥
भवत्पूर्वंचरेद्भैक्षमुपनीतोद्विजोत्तमः ।
भवन्मध्यन्तुराजन्योवैश्यस्तुभवदुत्तरम् ॥४९॥
मातरंवास्वसारंवामातुर्वाभगिनींनिजाम् ।
भिक्षेतभिक्षाम्प्रथमंयाचैनंनावमानयेत् ॥५०॥
समाहृत्यतुतद्भैक्षंयावदर्थममायया ।
निवेद्यगुरवेऽश्नीयादाचम्यप्राङ्मुखःशुचिः ॥५१॥
आयुष्यम्प्राङ्मुखोभुंक्तेयशस्यन्दक्षिणामुखः ।
श्रियम्प्रत्यङ्मुखोभुंक्तेऋतंभुंक्तेह्युदङ्मुखः ॥५२॥

उपस्पृश्यद्विजोनित्यमन्नमद्यात्समाहितः ।
भुक्त्वाचोपस्पृशेत्सम्यगद्भिःखानिचसंस्पृशेत् ॥५३॥
पूजयेदशनंनित्यमद्याच्चैतदकुत्सयन् ।
दृष्ट्वाहृष्येत्प्रसीदेच्चप्रतिनन्देच्चसर्वशः ॥५४॥
पूजितंह्यशनंनित्यंबलमूर्जंचयच्छति ।
अपूजितन्तुतद्भुक्तमुभयंनाशयेदिदम् ॥५५॥
नोच्छिष्टंकस्यचिद्दद्यान्नाद्याच्चैवतथान्तरा ।
नचैवात्यशनंकुर्यान्नचोच्छिष्टःक्वचिद्व्रजेत् ॥५६॥
अनारोग्यमनायुष्यमस्वर्ग्यंचातिभोजनम् ।
अपुण्यंलोकविद्विष्टन्तस्मात्तत्परिवर्जयेत् ॥५७॥
ब्राह्मेणविप्रस्तीर्थेननित्यकालमुपस्पृशेत् ।
कायत्रैदशिकाभ्यांवानपित्र्येणकदाचन ॥५८॥
अंगुष्ठमूलस्यतलेब्राह्मन्तीर्थम्प्रचक्षते ।
कायमंगुलिमूलेऽग्रेदैवम्पित्र्यन्तयोरधः ॥५९॥
त्रिराचामेदपःपूर्वंद्विःप्रमृज्यात्ततोमुखम् ।
खानिचैवस्पृशेदद्भिरात्मानंशिरएवच ॥६०॥
अनुष्णाभिरफेनाभिरद्भिस्तीर्थेनधर्मवित् ।
शौचेप्सुःसर्वदाचामेदेकान्तेप्रागुदङ्मुखः ॥६१॥

हृद्गाभिःपूयतेविप्रःकंठगाभिस्तुभूमिपः ।
वैश्योऽद्भिःप्राशिताभिस्तुशूद्रःस्पृष्टाभिरन्ततः ॥६२॥
उद्धृतेदक्षिणेपाणावुपवीत्युच्यतेद्विजः ।
सव्येप्राचीनआवीतीनिवीतीकण्ठसज्जने ॥६३॥
मेखलामजिनन्दंडमुपवीतंकमंडलुम् ।
अप्सुप्रास्यविनष्टानिगृह्णीतान्यानिमंत्रवत् ॥६४॥
केशान्तःषोडशेवर्षेब्राह्मणस्यविधीयते ।
राजन्यबन्धोर्द्वाविंशेवैश्यस्यद्व्यधिकेततः ॥६५॥
अमंत्रिकातुकार्येयंस्त्रीणामावृदशेषतः ।
संस्कारार्थंशरीरस्ययथाकालंयथाक्रमम् ॥६६॥
वैवाहिकोविधिःस्त्रीणांसंस्कारोवैदिकःस्मृतः ।
पतिसेवागुरौवासोगृहार्थोऽग्निपरिक्रिया ॥६७॥
एषप्रोक्तोद्विजातीनामौपनायनिकोविधिः ।
उत्पत्तिव्यंजकःपुण्यःकर्म्मयोगंनिबोधत ॥६८॥
उपनीयगुरुःशिष्यंशिक्षयेच्छौचमादितः ।
आचारमग्निकार्यंचसंध्योपासनमेवच ॥६९॥
अध्येष्यमाणस्त्वाचान्तोयथाशास्त्रमुदङ्मुखः ।
ब्रह्मांजलिकृतोऽध्याप्योलघुवासाजितेन्द्रियः ॥७०॥

ब्रह्मारम्भेऽवसानेचपादौग्राह्यौगुरोःसदा ।
संहत्यहस्तावध्येयंसहिब्रह्मांजलिःस्मृतः ॥७१॥
व्यत्यस्तपाणिनाकार्यमुपसंग्रहणंगुरोः ।
सव्येनसव्यःस्प्रष्टव्योदक्षिणेनचदक्षिणः ॥७२॥
अध्येष्यमाणन्तुगुरुर्नित्यकालमतन्द्रितः ।
अधीष्वभोइतिब्रूयाद्विरामोऽस्त्वितिचारमेत् ॥७३॥
ब्राह्मणःप्रणवंकुर्यादादावन्तेचसर्वदा ।
स्रवत्यनोंकृतम्पूर्वम्परस्ताच्चविशीर्यते ॥७४॥
प्राक्कूलान्पर्युपासीनःपवित्रैश्चैवपावितः ।
प्राणायामैस्त्रिभिःपूतस्ततओंकारमर्हति ॥७५॥
अकारंचाप्युकारंचमकारंचप्रजापतिः ।
वेदत्रयान्निरदुहद्भूर्भुवःस्वरितीतिच ॥७६॥
त्रिभ्यएवतुवेदेभ्यःपादम्पादमदूदुहत् ।
तदित्यृचोऽस्याःसावित्र्याःपरमेष्ठीप्रजापतिः ॥७७॥
एतदक्षरमेतांचजपन्व्याहृतिपूर्विकाम् ।
संध्ययोर्वेदविद्विप्रोवेदपुण्येनयुज्यते ॥७८॥
सहस्रकृत्वस्त्वभ्यस्यवहिरेतत्त्रिकंद्विजः ।
महतोऽप्येनसोमासात्त्वचेवाहिर्विमुच्यते ॥७९॥

एतयर्चा विसंयुक्तः काले च क्रियया स्वया ।
ब्रह्मक्षत्रियविड्योनिर्गर्हणां याति साधुषु ॥८०॥
ओंकारपूर्विकास्तिस्त्रो महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव सावित्री विज्ञेयम्ब्रह्मणो मुखं ॥८१॥
योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः ।
स ब्रह्म परमभ्येति वायुभूतः खमूर्तिमान् ॥८२॥
एकाक्षरम्परम्ब्रह्म प्राणायामाः परन्तपः ।
सावित्र्यास्तु परन्नास्ति मौनात्सत्यं विशिष्यते ॥८३॥
क्षरन्ति सर्वा वैदिक्यो जुहोति यजति क्रियाः ।
अक्षरं दुष्करं ज्ञेयम्ब्रह्म चैव प्रजापतिः ॥८४॥
विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः साहस्रो मानसः स्मृतः ॥८५॥
ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥८६॥
जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥८७॥
इन्द्रियाणां विचरतां विषयेष्वपहारिषु ।
संयमे यत्नमातिष्ठेद्विद्वान्यन्तेव वाजिनाम् ॥८८॥

एकादशेन्द्रियाण्याहुर्यानिपूर्वेमनीषिणः । 
तानिसम्यक्प्रवक्ष्यामियथावदनुपूर्वशः ॥८९॥
श्रोत्रन्त्वक्चक्षुषीजिह्वानासिकाचैवपंचमी । 
पायूपस्थंहस्तपादंवाक्चैवदशमीस्मृता ॥९०॥
बुद्धीन्द्रियाणिपंचैषांश्रोत्रादीन्यनुपूर्वशः । 
कर्मेन्द्रियाणिपंचैषाम्पाय्वादीनिप्रचक्षते ॥९१॥
एकादशम्मनोज्ञेयंस्वगुणेनोभयात्मकम् । 
यस्मिनजितेजितावेतौभवतःपंचकौगणौ ॥९२॥
इन्द्रियाणाम्प्रसंगेनदोषमृच्छत्यसंशयम् । 
संनियम्यतुतान्येवततःसिद्धिंनियच्छति ॥९३॥
नजातुकामःकामानामुपभोगेनशाम्यति । 
हविषाकृष्णवर्त्मेवभूयएवाभिवर्द्धते ॥९४॥
यश्चैतान्प्राप्नुयात्सर्वान्यश्चैतान्केवलांस्त्यजेत् । 
प्रापणात्सर्वकामानाम्परित्यागोविशिष्यते ॥९५॥
नतथैतानिशक्यन्तेसंनियन्तुमसेवया । 
विषयेषुप्रजुष्टानियथाज्ञानेननित्यशः ॥९६॥
वेदास्त्यागश्चयज्ञाश्चनियमाश्चतपांसिच । 
नविप्रदुष्टभावस्यसिद्धिंगच्छन्तिकर्हिचित् ॥९७॥

श्रुत्वास्पृष्ट्वाचदृष्ट्वाचभुक्त्वाघ्रात्वाचयोनरः ।
नहृष्यतिग्लायतिवासविज्ञेयोजितेन्द्रियः ॥९८॥
इन्द्रियाणान्तुसर्वेषांयद्येकंक्षरतीन्द्रियम् ।
तेनास्यक्षरतिप्रज्ञादृतेःपादादिवोदकम् ॥९९॥
वशेकृत्वेन्द्रियग्रामंसंयम्यचमनस्तथा ।
सर्वान्संसाधयेदर्थानक्षिण्वन्योगतस्तनुम् ॥१००॥
पूर्वांसंध्यांजपंस्तिष्ठेत्सावित्रीमाऽर्कदर्शनात् ।
पश्चिमान्तुसमासीनःसम्यगृक्षविभावनात् ॥१०१॥
पूर्वांसंध्यांजपंस्तिष्ठन्नैशमेनोव्यपोहति ।
पश्चिमान्तुसमासीनोमलंहन्तिदिवाकृतम ॥१०२॥
नतिष्ठतितुयःपूर्वांनोपास्तेयश्चपश्चिमाम् ।
सशूद्रवद्बहिष्कार्यःसर्वस्माद्द्विजकर्मणः ॥१०३॥
अपांसमीपेनियतोनैत्यकंविधिमास्थितः ।
सावित्रीमप्यधीयीतगत्वाऽरण्यंसमाहितः ॥१०४॥
वेदोपकरणेचैवस्वाध्यायेचैवनैत्यके ।
नानुरोधोऽस्त्यनध्यायेहोममंत्रेषुचैवहि ॥१०५॥
नैत्यकेनास्त्यनध्यायोब्रह्मसत्रंहितत्स्मृतम ।
ब्रह्माहुतिहुतम्पुण्यमंनध्यायवषट्कृतम् ॥१०६॥

यःस्वाध्यायमधीतेऽब्दंविधिनानियतःशुचिः ।
तस्यनित्यंक्षरत्येषपयोदधिघृतंमधु ॥१०७॥
अग्नीन्धनम्भैक्षचर्यामधःशय्यांगुरोर्हितम् ।
आसमावर्तनात्कुर्यात्कृतोपनयनोद्विजः ॥१०८॥
आचार्यपुत्रःशुश्रूषुर्ज्ञानदोधार्मिकःशुचिः ।
आप्तःशक्तोऽर्थदःसाधुःस्वोऽध्याप्यादशधर्मतः ॥१०९॥
नापृष्टःकस्यचिद्ब्रूयान्नचान्यायेनपृच्छतः ।
जानन्नपिहिमेधावीजडवल्लोकआचरेत् ॥११०॥
अधर्मेणचयःप्राहयश्चाधर्मेणपृच्छति ।
तयोरन्यतरःप्रैतिविद्वेषंवाऽधिगच्छति ॥१११॥
धर्मार्थौयत्रनस्यातांशुश्रूषावाऽपितद्विधा ।
तत्रविद्यानवप्तव्याशुभंबीजमिवोषरे ॥११२॥
विद्ययैवसमंकामंमर्तव्यम्ब्रह्मवादिना ।
आपद्यपिहिघोरायांनत्वेनामिरिणेवपेत् ॥११३॥
विद्याब्राह्मणमेत्याहसेवधिस्तेऽस्मिरक्षमाम् ।
असूयकायमांमादास्तथास्यांवीर्यवत्तमा ॥११४॥
यमेवतुशुचिंविद्यानियतंब्रह्मचारिणम् ।
तस्मैमांब्रूहिविप्रायनिधिपायाप्रमादिने ॥११५॥

ब्रह्मयस्त्वननुज्ञातमधीयानादवाप्नुयात् ।
सब्रह्मस्तेयसंयुक्तोनरकम्प्रतिपद्यते ॥११६॥
लौकिकंवैदिकंवाऽपितथाध्यात्मिकमेवच ।
आददीतयतोज्ञानंतम्पूर्वमभिवादयेत् ॥११७॥
सावित्रीमात्रसारोऽपिवरंविप्रःसुयंत्रितः ।
नायंत्रितस्त्रिवेदोऽपिसर्वाशीसर्वविक्रयी ॥११८॥
शय्यासनेऽध्याचरितेश्रेयसानसमाविशेत् ।
शय्यासनस्थश्चैवैनम्प्रत्युत्थायाभिवादयेत् ॥११९॥
ऊर्द्ध्वम्प्राणाह्युत्क्रामन्तियूनःस्थविरआयति ।
प्रत्युत्थानाभिवादाभ्याम्पुनस्तान्प्रतिपद्यते ॥१२०॥
अभिवादनशीलस्यनित्यंवृद्धोपसेविनः ।
चत्वारितस्यवर्द्धन्तेआयुर्विद्यायशोबलम् ॥१२१॥
अभिवादात्परंविप्रोज्यायांसमभिवादयन् ।
असौनामाहमस्मीतिस्वंनामपरिकीर्तयेत् ॥१२२॥
नामधेयस्ययेकेचिदभिवादंनजानते ।
तान्प्राज्ञोऽहमितिब्रूयात्स्त्रियःसर्वास्तथैवच ॥१२३॥
भोःशब्दंकीर्तयेदन्तेस्वस्यनाम्नोऽभिवादने ।
नाम्नांस्वरूपभावोहिभोभावऋषिभिःस्मृतः ॥१२४॥

आयुष्मान्भवसौम्येतिवाच्योविप्रोऽभिवादने ।
अकारश्चास्यनाम्नोऽन्तेवाच्यःपूर्वाक्षरःप्लुतः ॥१२५॥
योनवेत्त्यभिवादस्यविप्रःप्रत्यभिवादनम् ।
नाभिवाद्यःसविदुषायथाशूद्रस्तथैवसः ॥१२६॥
ब्राह्मणंकुशलम्पृच्छेत्क्षत्रबन्धुमनामयम् ।
वैश्यंक्षेमंसमागम्यशूद्रमारोग्यमेवच ॥१२७॥
अवाच्योदीक्षितोनाम्नायवीयानपियोभवेत् ।
भोभवत्पूर्वकंत्वेनमभिभाषेतधर्मवित् ॥१२८॥
परपत्नीतुयास्त्रीस्यादसम्बन्धाचयोनितः ।
तांब्रूयाद्भवतीत्येवंसुभगेभगिनीतिच ॥१२९॥
मातुलांश्चपितृव्यांश्चश्वशुरानृत्विजोगुरून् ।
असावहमितिब्रूयात्प्रत्युत्थाययवीयसः ॥१३०॥
मातृष्वसामातुलानीश्वश्रूरथपितृष्वसा ।
सम्पूज्यागुरुपत्नीवत्समास्तागुरुभार्यया ॥१३१॥
भ्रातुर्भार्योपसंग्राह्यासवर्णाऽहन्यहन्यपि ।
विप्रोष्यतूपसंग्राह्याज्ञातिसम्बन्धियोषितः ॥१३२॥
पितुर्भगिन्याम्मातुश्चज्यायस्यांचस्वसर्यपि ।
मातृवद्वृत्तिमातिष्ठेन्माताताभ्योगरीयसी ॥१३३॥

तेतमर्थमपृच्छन्तदेवानागतमन्यवः ।
देवाश्चैतान्समेत्योचुर्न्याय्यंवःशिशुरुक्तवान् ॥१५२॥
अज्ञोभवतिवैबालःपिताभवतिमंत्रदः ।
अज्ञंहिबालमित्याहुःपितेत्येवतुमंत्रदम् ॥१५३॥
नहायनैर्नपलितैर्नवित्तेननबन्धुभिः ।
ऋषयश्चक्रिरेधर्मंयोऽनूचानःसनोमहान् ॥१५४॥
विप्राणांज्ञानतोज्यैष्ठ्यंक्षत्रियाणान्तुवीर्यतः ।
वैश्यानान्धान्यधनतःशूद्राणामेवजन्मतः ॥१५५॥
नतेनवृद्धोभवतियेनास्यपलितंशिरः ।
योवैयुवाप्यधीयानस्तन्देवाःस्थविरंविदुः ॥१५६॥
यथाकाष्ठमयोहस्तीयथाचर्ममयोमृगः ।
यश्चविप्रोऽनधीयानस्त्रयस्तेनामबिभ्रति ॥१५७॥
यथाषंढोऽफलःस्त्रीषुयथागौर्गविचाफला ।
यथाचाज्ञेऽफलन्दानंतथाविप्रोऽनृचोऽफलः ॥१५८॥
अहिंसयैवभूतानांकार्यंश्रेयोऽनुशासनम् ।
वाक्चैवमधुराश्लक्ष्णाप्रयोज्याधर्ममिच्छता ॥१५९॥
यस्यवाङ्मनसीशुद्धेसम्यग्गुप्तेचसर्वदा ।
सवैसर्वमवाप्नोतिवेदान्तोपगतंफलम् ॥१६०॥

नारुन्तुदःस्यादार्त्तो॰पिनपरद्रोहकर्मधीः ।
ययास्योद्विजतेवाचानालोक्यांतामुदीरयेत् ॥१६१॥
सम्मानाद्ब्राह्मणोनित्यमुद्विजेतविषादिव ।
अमृतस्येवचाकांक्षेदवमानस्यसर्वदा ॥१६२॥
सुखंह्यवमतःशेतेसुखंचप्रतिबुध्यते ।
सुखंचरतिलोके॰स्मिन्नवमन्ताविनश्यति ॥१६३॥
अनेनक्रमयोगेनसंस्कृतात्माद्विजःशनैः ।
गुरौवसन्संचिनुयाद्ब्रह्माधिगमिकन्तपः ॥१६४॥
तपोविशेषैर्विविधैर्व्रतैश्चविधिचोदितैः ।
वेदःकृत्स्नो॰धिगन्तव्यःसरहस्योद्विजन्मना ॥१६५॥
वेदमेवसदाभ्यस्येत्तपस्तप्स्यन्द्विजोत्तमः ।
वेदाभ्यासोहिविप्रस्यतपःपरमिहोच्यते ॥१६६॥
आहैवसनखाग्रेभ्यःपरमन्तप्यतेतपः ।
यःस्रग्व्यपिद्विजो॰धीतेस्वाध्यायंशक्तितो॰न्वहम् ॥१६७॥
यो॰नधीत्यद्विजोवेदमन्यत्रकुरुतेश्रमम् ।
सजीवन्नेवशूद्रत्वमाशुगच्छतिसान्वयः ॥१६८॥
मातुरग्रे॰धिजननंद्वितीयंमौञ्जिबन्धने ।
तृतीयंयज्ञदीक्षायांद्विजस्यश्रुतिचोदनात् ॥१६९॥

तत्रयद्ब्रह्मजन्मास्यमौंजीबन्धनचिह्नितम् ।
तत्रास्यमातासावित्रीपितात्वाचार्यउच्यते ॥१७०॥
वेदप्रदानादाचार्यम्पितरम्परिचक्षते ।
नह्यस्मिन्युज्यतेकर्मकिंचिदामौंजिबन्धनात्॥ १७१॥
नाभिव्याहारयेद्ब्रह्मस्वधानिनयनादृते ।
शूद्रेणहिसमस्तावद्यावद्वेदेनजायते ॥१७२॥
कृतोपनयनस्यास्यव्रतादेशनमिष्यते ।
ब्रह्मणोग्रहणंचैवक्रमेणविधिपूर्वकम् ॥१७३॥
यद्यस्यविहितंचर्मयत्सूत्रंयाचमेखला ।
योदंडोयच्चवसनन्तत्तदस्यव्रतेष्वपि ॥१७४॥
सेवेतेमांस्तुनियमान्ब्रह्मचारीगुरौवसन् ।
सन्नियम्येन्द्रियग्रामन्तपोवृद्ध्यर्थमात्मनः ॥१७५॥
नित्यंस्नात्वाशुचिःकुर्याद्देवर्षिपितृतर्पणम् ।
देवताऽभ्यर्चनंचैवसमिधादानमेवच ॥१७६॥
वर्ज्जयेन्मधुमांसंचगन्धंमाल्यंरसान्स्त्रियः ।
शुक्तानियानिसर्वाणिप्राणिनांचैवहिंसनं ॥१७७॥
अभ्यंगमंजनंचाक्ष्णोरुपानच्छत्रधारणम् ।
कामंक्रोधंचलोभंचनर्त्तनंगीतवादनम् ॥१७८॥

द्यूतंचजनवादंचपरिवादन्तथाऽनृतम् ।
स्त्रीणांचप्रेक्षणालम्भमुपघातम्परस्यच ॥१७९॥
एकःशयीतसर्वत्रनरेतःस्कंदयेत्क्वचित् ।
कामाद्धिस्कन्दयन्रेतोहिनस्तिव्रतमात्मनः ॥१८०॥
स्वप्नेसिक्त्वाब्रह्मचारीद्विजःशुक्रमकामतः ।
स्नात्वाऽर्कमर्चयित्वात्रिःपुनर्मामित्यृचंजपेत् ॥१८१॥
उदकुम्भंसुमनसोगोशकृन्मृत्तिकाकुशान् ।
आहरेद्यावदार्थानिभैक्षंचाहरहश्चरेत् ॥१८२॥
वेदयज्ञैरहीनानाम्प्रशस्तानांस्वकर्मसु ।
ब्रह्मचार्याहरेद्भैक्षंगृहेभ्यःप्रयतोऽन्वहम् ॥१८३॥
गुरोःकुलेनभिक्षेतनज्ञातिकुलबन्धुषु ।
अलाभेत्वन्यगेहानाम्पूर्वम्पूर्वंविवर्जयेत् ॥१८४॥
सर्वंवाऽपिचरेद्ग्रामम्पूर्वोक्तानामसम्भवे ।
नियम्यप्रयतोवाचमभिशस्तांस्तुवर्जयेत् ॥१८५॥
दूरादाहृत्यसमिधःसंनिदध्याद्विहायसि ।
सायम्प्रातश्चजुहुयात्ताभिरग्निमतन्द्रितः ॥१८६॥
अकृत्वाभैक्षचरणमसमिध्यचपावकम् ।
अनातुरःसप्तरात्रमवकीर्णिव्रतंचरेत् ॥१८७॥

भैक्षेणवर्त्तयेन्नित्यंनैकान्नादीभवेद्व्रती ।
भैक्षेणव्रतिनोवृत्तिरुपवाससमास्मृता ॥१८८॥
व्रतवद्देवदैवत्ये पित्र्येकर्मण्यथर्षिवत् ।
काममभ्यर्थितोऽश्नीयाद्व्रतमस्यनलुप्यते ॥१८९॥
ब्राह्मणस्यैवकर्मैतदुपदिष्टंमनीषिभिः ।
राजन्यवैश्ययोस्त्वेवंनैतत्कर्मविधीयते ॥१९०॥
चोदितोगुरुणानित्यमप्रचोदितएववा ।
कुर्यादध्ययनेयत्नमाचार्यस्यहितेषुच ॥१९१॥
शरीरंचैववाचंचबुद्धीन्द्रियमनांसिच ।
नियम्यप्रांजलिस्तिष्ठेद्वीक्षमाणोगुरोर्मुखम् ॥१९२॥
नित्यमुद्धृतपाणिःस्यात्साध्वाचारःसुसंयतः ।
आस्यतामितिचोक्तःसन्नासीताभिमुखंगुरोः ॥१९३॥
हीनान्नवस्त्रवेषःस्यात्सर्वदागुरुसन्निधौ ।
उत्तिष्ठेत्प्रथमंचास्यचरमंचैवसंविशेत् ॥१९४॥
प्रतिश्रवणसम्भाषेशयानोनसमाचरेत् ।
नासीनोनचभुंजानोनतिष्ठन्नपराङ्मुखः ॥१९५॥
आसीनस्यस्थितःकुर्यादभिगच्छंस्तुतिष्ठतः ।
प्रत्युद्गम्यत्वाव्रजतःपश्चाद्धावंस्तुधावतः ॥१९६॥

पराङ्मुखस्याभिमुखोदूरस्थस्यैत्यचान्तिकम् ।
प्रणम्यतुशयानस्यनिदेशेचैवतिष्ठतः ॥१९७॥
नीचंशय्यासनंचास्यसर्वदागुरुसन्निधौ ।
गुरोस्तुचक्षुर्विषयेनयथेष्टासनोभवेत् ॥१९८॥
नोदाहरेदस्यनामपरोक्षमपिकेवलम् ।
नचैवास्यानुकुर्वीतगतिभाषितचेष्टितम् ॥१९९॥
गुरोर्यत्रपरीवादोनिन्दावाऽपिप्रवर्त्तते ।
कर्णौतत्रापिधातव्यौगन्तव्यम्वाततोऽन्यतः ॥२००॥
परीवादात्खरोभवतिश्वावैभवतिनिन्दकः ।
परिभोक्ताकृमिर्भवतिकीटोभवतिमत्सरी ॥२०१॥
दूरस्थोनार्चयेदेनंनक्रुद्धोनान्तिकेस्त्रियाः ।
यानासनस्थश्चैवैनमवरुह्याभिवादयेत् ॥२०२॥
प्रतिवातेऽनुवातेचनासीतगुरुणासह ।
असंश्रवेचैवगुरोर्नकिंचिदपिकीर्त्तयेत् ॥२०३॥
गोऽश्वोष्ट्रयानप्रासादप्रस्तरेषुकटेषुच ।
आसीतगुरुणासार्द्धंशिलाफलकनौषुच ॥२०४॥
गुरोर्गुरौसन्निहितेगुरुवद्वृत्तिमाचरेत् ।
नचानिसृष्टोगुरुणास्वान्गुरूनभिवादयेत् ॥२०५॥

विद्यागुरुष्वेतदेवनित्यावृत्तिःस्वयोनिषु ।
प्रतिषेधत्सुचाधर्माद्धितंचोपदिशत्स्वपि ॥२०६॥
श्रेयःसुगुरुवद्वृत्तिंनित्यमेवसमाचरेत् ।
गुरुपुत्रेषुचार्य्येषुगुरोश्चैवस्वबन्धुषु ॥२०७॥
बालःसमानजन्मावाशिष्योवायज्ञकर्मणि ।
अध्यापयन्गुरुसुतोगुरुवन्मानमर्हति ॥२०८॥
उत्सादनंचगात्राणांस्नापनोच्छिष्टभोजने ।
नकुर्याद्गुरुपुत्रस्यपादयोश्चावनेजनम् ॥२०९॥
गुरुवत्प्रतिपूज्याःस्युःसवर्णागुरुयोषितः ।
असवर्णास्तुसंपूज्याःप्रत्युत्थानाभिवादनैः ॥२१०॥
अभ्यंजनंस्नापनंचगात्रोत्सादनमेवच ।
गुरुपत्न्यानकार्याणिकेशानांचप्रसाधनम् ॥२११॥
गुरुपत्नीतुयुवतिर्नाभिवाद्येहपादयोः ।
पूर्णविंशतिवर्षेणगुणदोषौविजानता ॥२१२॥
स्वभावएषनारीणांनराणामिहदूषणम् ।
अतोऽर्थान्नप्रमाद्यन्तिप्रमदासुविपश्चितः ॥२१३॥
अविद्वांसमलंलोकेविद्वांसमपिवापुनः ।
प्रमदाह्युत्पथंनेतुंकामक्रोधवशानुगम् ॥२१४॥

मात्रास्वस्त्रादुहित्रावानविविक्तासनोभवेत् ।
बलवानिन्द्रियग्रामोविद्वांसमपिकर्षति ॥२१५॥
कामन्तुगुरुपत्नीनांयुवतीनांयुवाभुवि ।
विधिवद्वन्दनंकुर्यादसावहमितिब्रुवन् ॥२१६॥
विप्रोष्यपादग्रहणमन्वहंचाभिवादनम् ।
गुरुदारेषुकुर्वीतसतान्धर्ममनुस्मरन् ॥२१७॥
यथाखनन्खनित्रेणनरोवार्य्यधिगच्छति ।
तथागुरुगतांविद्यांशुश्रूषुरधिगच्छति ॥२१८॥
मुंडोवाजटिलोवास्यादथवास्याच्छिखाजटः ।
नैनंग्रामेऽभिनिम्लोचेत्सूर्योनाभ्युदियात्क्वचित् ॥२१९॥
तंचेदभ्युदियात्सूर्यःशयानंकामचारतः ।
निम्लोचेद्वाऽप्यविज्ञानाज्जपन्नुपवसेद्दिनम् ॥२२०॥
सूर्येणह्यभिनिर्मुक्तःशयानोऽभ्युदितश्चयः ।
प्रायश्चित्तमकुर्वाणोयुक्तःस्यान्महतैनसा ॥२२१॥
आचम्यप्रयतोनित्यमुभेसंध्येसमाहितः ।
शुचौदेशेजपन्जप्यमुपासीतयथाविधि ॥२२२॥
यदिस्त्रीयद्यवरजःश्रेयःकिंचित्समाचरेत् ।
तत्सर्वमाचरेद्युक्तोयत्रवाऽस्यरमेन्मनः ॥२२३॥

धर्मार्थावुच्यतेश्रेयःकामार्थौधर्मएवच ।
अर्थएवेहवाश्रेयस्त्रिवर्गइतितुस्थितिः ॥२२४॥
आचार्योब्रह्मणोमूर्त्तिःपितामूर्त्तिःप्रजापतेः ।
मातापृथिव्यामूर्त्तिस्तुभ्रातास्वोमूर्त्तिरात्मनः ॥२२५॥
आचार्यश्चपिताचैवमाताभ्राताचपूर्वजः ।
नार्त्तेनाप्यवमन्तव्याब्राह्मणेनविशेषतः ॥२२६॥
यंमातापितरौक्लेशंसहेतेसम्भवेनृणाम् ।
नतस्यनिष्कृतिःशक्याकर्तुंवर्षशतैरपि ॥२२७॥
तयोर्नित्यम्प्रियंकुर्यादाचार्यस्यचसर्वदा ।
तेष्वेवत्रिषुतुष्टेषुतपःसर्वंसमाप्यते ॥२२८॥
तेषांत्रयाणांशुश्रूषापरमन्तपउच्यते ।
नतैरभ्यननुज्ञातोधर्ममन्यंसमाचरेत् ॥२२९॥
तएवहित्रयोलोकास्तएवत्रयआश्रमाः ।
तएवहित्रयोवेदास्तएवोक्तास्त्रयोऽग्नयः ॥२३०॥
पितावैगार्हपत्योऽग्निर्माताऽग्निर्दक्षिणःस्मृतः ।
गुरुराहवनीयस्तुसाऽग्नित्रेतागरीयसी ॥२३१॥
त्रिष्वप्रमाद्यन्नेतेषुत्रीन्लोकान्विजयेद्गृही ।
दीप्यमानःस्ववपुषादेववद्दिविमोदते ॥२३२॥

इमंलोकंमातृभक्त्यापितृभक्त्यातुमध्यमम् ।
गुरुशुश्रूषयात्वेवम्ब्रह्मलोकंसमश्नुते ॥२३३॥
सर्वेतस्यादृताधर्मायस्यैतेत्रयआदृताः ।
अनादृतास्तुयस्यैतेसर्वास्तस्याऽफलाःक्रियाः ॥२३४॥
यावत्त्रयस्तेजीवेयुस्तावन्नान्यंसमाचरेत् ।
तेष्वेवनित्यंशुश्रूषांकुर्यात्प्रियहितेरतः ॥२३५॥
तेषामनुपरोधेनपारत्र्यंयद्यदाचरेत् ।
तत्तन्निवेदयेत्तेभ्योमनोवचनकर्म्मभिः ॥२३६॥
त्रिष्वेतेष्वितिकृत्यंहिपुरुषस्यसमाप्यते ।
एषधर्मःपरःसाक्षादुपधर्मोऽन्यउच्यते ॥२३७॥
श्रद्दधानःशुभांविद्यामाददीतावरादपि ।
अन्त्यादपिपरन्धर्मंस्त्रीरत्नन्दुष्कुलादपि ॥२३८॥
विषादप्यमृतंग्राह्यंबालादपिसुभाषितम् ।
अमित्रादपिसद्वृत्तममेध्यादपिकांचनम् ॥२३९॥
स्त्रियोरत्नान्यथोविद्याधर्मःशौचंसुभाषितम् ।
विविधानिचशिल्पानिसमादेयानिसर्वतः ॥२४०॥
अब्राह्मणादध्ययनमापत्कालेविधीयते ।
अनुव्रज्याचशुश्रूषायावदध्ययनंगुरोः ॥२४१॥

नाब्राह्मणेगुरौशिष्योवासमात्यन्तिकंवसेत् ।
ब्राह्मणेचाननूचानेकांक्षन्गतिमनुत्तमाम् ॥२४२॥
यदित्वात्यन्तिकंवासंरोचयेतगुरोःकुले ।
युक्तःपरिचरेदेनमाशरीरविमोक्षणात् ॥२४३॥
आसमाप्तेःशरीरस्ययस्तुशुश्रूषतेगुरुम् ।
सगच्छत्यंजसाविप्रोब्रह्मणःसद्मशाश्वतम् ॥२४४॥
नपूर्वंगुरवेकिंचिदुपकुर्वीतधर्मवित् ।
स्नास्यंस्तुगुरुणाज्ञप्तःशक्त्यागुर्वर्थमाहरेत् ॥२४५॥
क्षेत्रंहिरण्यंगामश्वंछत्रोपानहमासनम् ।
धान्यंशाकंचवासांसिगुरवेप्रीतिमावहेत् ॥२४६॥
आचार्येतुखलुप्रेतेगुरुपुत्रेगुणान्विते ।
गुरुदारेसपिंडेवागुरुवद्वृत्तिमाचरेत् ॥२४७॥
एतेष्वविद्यमानेषुस्थानासनविहारवान् ।
प्रयुंजानोऽग्निशुश्रूषांसाधयेद्देहमात्मनः ॥२४८॥
एवंचरतियोविप्रोब्रह्मचर्यमविप्लुतः ।
सगच्छत्युत्तमंस्थानंनचेहाजायतेपुनः ॥२४९॥

॥ इतिमानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायां ॥
॥ द्वितीयोऽध्यायः ॥

॥ मानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायान्तृतीयोऽध्यायः ॥

षट्त्रिंशदाब्दिकंचर्यंगुरौत्रैवेदिकंव्रतम् ।
तदर्द्धिकम्पादिकंवाग्रहणान्तिकमेववा ॥१॥
वेदानधीत्यवेदौवावेदंवाऽपियथाक्रमम् ।
अविप्लुतब्रह्मचर्योगृहस्थाश्रममावसेत् ॥२॥
तम्प्रतीतंस्वधर्म्मेणब्रह्मदायहरम्पितुः ।
स्रग्विणन्तल्पआसीनमर्हयेत्प्रथमंगवा ॥३॥
गुरुणाऽनुमतःस्नात्वासमावृत्तोयथाविधि ।
उद्वहेतद्विजोभार्यांसवर्णांलक्षणान्विताम् ॥४॥
असपिंडाचयामातुरसगोत्राचयापितुः ।
साप्रशस्ताद्विजातीनान्दारकर्म्मणिमैथुने ॥५॥
महांत्यपिसमृद्धानिगोऽजाविधनधान्यतः ।
स्त्रीसम्बन्धेदशैतानिकुलानिपरिवर्जयेत् ॥६॥
हीनक्रियंनिष्पुरुषंनिश्छन्दोरोमशार्शसम् ।
क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानिच ॥७॥

नौद्वहेत्कपिलांकन्यांनाधिकांगींनरोगिणीम् ।
नालोमिकांनातिलोमांनवाचाटांनपिंगलाम् ॥८॥
नर्क्षवृक्षनदीनाम्नींनान्त्यपर्वतनामिकाम् ।
नपक्ष्यहिप्रेष्यनाम्नींनचभीषणनामिकाम् ॥९॥
अव्यंगांगींसौम्यनाम्नींहंसवारणगामिनीम् ।
तनुलोमकेशदशनांमृद्वंगीमुद्वहेत्स्त्रियम् ॥१०॥
यस्यास्तुनभवेद्भ्राताविज्ञायेतवापिता ।
नोपयच्छेततांप्राज्ञःपुत्रिकाधर्मशंकया ॥११॥
सवर्णाग्रेद्विजातीनांप्रशस्तादारकर्मणि ।
कामतस्तुप्रवृत्तानामिमाःस्युःक्रमशोऽवराः ॥१२॥
शूद्रैवभार्याशूद्रस्यसाचस्वाचविशःस्मृते ।
तेचस्वाचैवराज्ञश्चताश्चस्वाचाग्रजन्मनः ॥१३॥
नब्राह्मणक्षत्रिययोरापद्यपिहितिष्ठतोः ।
कस्मिंश्चिदपिवृत्तान्तेशूद्राभार्योपदिश्यते ॥१४॥
हीनजातिंस्त्रियंमोहादुद्वहन्तोद्विजातयः ।
कुलान्येवनयन्त्याशुससन्तानानिशूद्रताम् ॥१५॥
शूद्रावेदीपतत्यत्रेरुतथ्यतनयस्यच ।
शौनकस्यसुतोत्पत्त्यातदपत्यतयाभृगोः ॥१६॥

शूद्रांशयनमारोप्यब्राह्मणोयात्यधोगतिम् ।
जनयित्वासुतन्तस्याम्ब्राह्मण्यादेवहीयते ॥१७॥
दैवपित्र्यातिथेयानितत्प्रधानानियस्यतु ।
नाश्नन्तिपितृदेवास्तन्नचस्वर्गंसगच्छति ॥१८॥
वृषलीफेनपीतस्यनिःश्वासोपहतस्यच ।
तस्यांचैवप्रसूतस्यनिष्कृतिर्नविधीयते ॥१९॥
चतुर्णामपिवर्णानाम्प्रेत्यचेहहिताहितान् ।
अष्टाविमान्समासेनस्त्रीविवाहान्निबोधत ॥२०॥
ब्राह्मोदैवस्तथैवार्षःप्राजापत्यस्तथासुरः ।
गान्धर्वोराक्षसश्चैवपैशाचश्चाष्टमोऽधमः ॥२१॥
योयस्यधर्म्योवर्णस्ययगुणदोषौचयस्ययौ ।
तद्वःसर्वम्प्रवक्ष्यामिप्रसवेचगुणागुणान् ॥२२॥
षडानुपूर्व्याविप्रस्यक्षत्रस्यचतुरोऽवरान् ।
विट्शूद्रयोस्तुतानेवविद्याद्धर्म्यान्नराक्षसान् ॥२३॥
चतुरोब्राह्मणस्याद्यान्प्रशस्तान्कवयोविदुः ।
राक्षसंक्षत्रियस्यैकमासुरंवैश्यशूद्रयोः ॥२४॥
पंचानान्तुत्रयोधर्म्याद्वावधर्म्यौस्मृताविह ।
पैशाचश्चासुरश्चैवनकर्तव्यौकदाचन ॥२५॥

पृथक्पृथग्वामिश्रौवाविवाहौपूर्वचोदितौ ।
गान्धर्वोराक्षसश्चैवधर्म्यौक्षत्रस्यतौस्मृतौ ॥२६॥
आच्छाद्यचार्चयित्वाचश्रुतिशीलवतेस्वयम् ।
आहूयदानंकन्यायाब्राह्मोधर्मःप्रकीर्तितः ॥२७॥
यज्ञेतुविततेसम्यगृत्विजेकर्म्मकुर्वते ।
अलंकृत्यसुतादानन्दैवन्धर्म्मम्प्रचक्षते ॥२८॥
एकंगोमिथुनंद्वेवावरादादायधर्म्मतः ।
कन्याप्रदानंविधिवदार्षोधर्म्मःसउच्यते ॥२९॥
सहोभौचरतान्धर्ममितिवाचाऽनुभाष्यच ।
कन्याप्रदानमभ्यर्च्यप्राजापत्योविधिःस्मृतः ॥३०॥
ज्ञातिभ्योद्रविणन्दत्वाकन्यायैचैवशक्तितः ।
कन्याप्रदानंस्वाच्छन्द्यादासुरोधर्मउच्यते ॥३१॥
इच्छयाऽन्योन्यसंयोगःकन्यायाश्चवरस्यच ।
गान्धर्वःसतुविज्ञेयोमैथुन्यःकामसम्भवः ॥३२॥
हत्वाछित्वाचभित्वाचक्रोशन्तींरुदतींगृहात् ।
प्रसह्यकन्याहरणंराक्षसोविधिरुच्यते ॥३३॥
सुप्तांमत्तांप्रमत्तांवारहोयत्रोपगच्छति ।
सपापिष्ठोविवाहानाम्पैशाचश्चाष्टमोऽधमः ॥३४॥

अन्निरेवद्विजाग्र्याणांकन्यादानंविशिष्यते ।
इतरेषान्तुवर्णानामितरेतरकाम्यया ॥३५॥
योयस्यैषांविवाहानांमनुनांकीर्त्तितोगुणः ।
सर्वंशृणुततंविप्राःसर्वंकीर्त्तयतोमम ॥३६॥
दशपूर्वान्परान्वंश्यानात्मानंचैकविंशकम् ।
ब्राह्मीपुत्रःसुकृतकृन्मोचयेदेनसःपितॄन् ॥३७॥
दैवोढाजःसुतश्चैवसप्तसप्तपरावरान् ।
आर्षोढाजःसुतस्त्रींस्त्रीन्षट्षट्कायोढजःसुतः ॥३८॥
ब्राह्मादिषुविवाहेषुचतुर्ष्वेवानुपूर्वशः ।
ब्रह्मवर्च्चस्विनःपुत्राजायन्तेशिष्टसंमताः ॥३९॥
रूपसत्वगुणोपेताधनवन्तोयशस्विनः ।
पर्य्याप्तभोगाधर्म्मिष्ठाजीवन्तिचशतंसमाः ॥४०॥
इतरेषुतुशिष्टेषुनृशंसानृतवादिनः ।
जायन्तेदुर्विवाहेषुब्रह्मधर्मद्विषःसुताः ॥४१॥
अनिन्दितैःस्त्रीविवाहैरनिंद्याभवतिप्रजा ।
निन्दितैर्निन्दितानॄणान्तस्मान्निंद्यान्विवर्जयेत् ॥४२॥
पाणिग्रहणसंस्कारःसवर्णासूपदिश्यते ।
असवर्णास्वयंज्ञेयोविधिरुद्वाहकर्म्मणि ॥४३॥

शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया ।
वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने ॥४४॥
ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा ।
पर्ववर्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया ॥४५॥
ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः ।
चतुर्भिरितरैः सार्द्धमहोभिः सद्विगर्हितैः ॥४६॥
तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या ।
त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः ॥४७॥
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।
तस्माद्युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियम् ॥४८॥
पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः ।
समेऽपुमान्पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः ॥४९॥
निंद्यास्वष्टासु चान्यासु स्त्रियो रात्रिषु वर्ज्जयन् ।
ब्रह्मचार्येव भवति यत्र तत्राश्रमे वसन् ॥५०॥
न कन्यायाः पिता विद्वान्गृह्णीयाच्छुल्कमण्वपि ।
गृह्णञ्छुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी ॥५१॥
स्त्रीधनानि तु ये मोहादुपजीवन्ति बान्धवाः ।
नारीयानानि वस्त्रं वा ते पापा यान्त्यधोगतिम् ॥५२॥

आर्षेगोमिथुनंशुल्कंकेचिदाहुर्मृषैवतत् ।
अल्पोऽप्येवंमहान्वाऽपिविक्रयस्तावदेवसः ॥५३॥
यासांनाददतेशुल्कंज्ञातयोनसविक्रयः ।
अर्हणन्तत्कुमारीणामानृशंस्यंचकेवलम् ॥५४॥
पितृभिर्भ्रातृभिश्चैताःपतिभिर्देवरैस्तथा ।
पूज्याभूषयितव्याश्चबहुकल्याणमीप्सुभिः ॥५५॥
यत्रनार्यस्तुपूज्यन्तेरमन्तेतत्रदेवताः ।
यत्रैतास्तुनपूज्यन्तेसर्वास्तत्राफलाःक्रियाः ॥५६॥
शोचन्तिजामयोयत्रविनश्यत्याशुतत्कुलम् ।
नशोचन्तितुयत्रैतावर्द्धतेतद्धिसर्वदा ॥५७॥
जामयोयानिगेहानिशपन्त्यप्रतिपूजिताः ।
तानिकृत्याहतानीवविनश्यन्तिसमन्ततः ॥५८॥
तस्मादेताःसदापूज्याभूषणाच्छादनाशनैः ।
भूतिकामैर्नरैर्नित्यंसत्कारेषूत्सवेषुच ॥५९॥
सन्तुष्टोभार्ययाभर्त्ताभर्त्राभार्यातथैवच ।
यस्मिन्नेवकुलेनित्यंकल्याणन्तत्रवैध्रुवम् ॥६०॥
यदिहिस्त्रीनरोचेतपुमांसंनप्रमोदयेत् ।
अप्रमोदात्पुनःपुंसःप्रजननंनप्रवर्त्तते ॥६१॥

स्त्रियान्तुरोचमानायांसर्वन्तद्रोचतेकुलम् ।
तस्यान्त्वरोचमानायांसर्वमेवनरोचते ॥६२॥
कुविवाहैःक्रियालोपैर्वेदानध्ययनेनच ।
कुलान्यकुलतांयान्तिब्राह्मणातिक्रमेणच ॥६३॥
शिल्पेनव्यवहारेणशूद्रापत्यैश्चकेवलैः ।
गोभिरश्वैश्चयानैश्चकृष्याराजोपसेवया ॥६४॥
अयाज्ययाजनैश्चैवनास्तिक्येनचकर्म्मणाम् ।
कुलान्याशुविनश्यन्तियानिहीनानिमंत्रतः ॥६५॥
मंत्रतस्तुसमृद्धानिकुलान्यल्पधनान्यपि ।
कुलसंख्यांचगच्छन्तिकर्षन्तिचमहद्यशः ॥६६॥
वैवाहिकेऽग्नौकुर्वीतगृह्यंकर्म्मयथाविधि ।
पंचयज्ञविधानंचपक्तिंचान्वाहिकींगृही ॥६७॥
पंचसूनागृहस्थस्यचुल्लीपेषण्युपस्करः ।
कंडनीचोदकुम्भश्चबध्यतेयास्तुवाहयन् ॥६८॥
तासांक्रमेणसर्वासांनिष्कृत्यर्थंमहर्षिभिः ।
पंचक्लृप्तामहायज्ञाःप्रत्यहंगृहमेधिनाम् ॥६९॥
अध्यापनम्ब्रह्मयज्ञःपितृयज्ञस्तुतर्पणम् ।
होमोदैवोबलिर्भौतोनृयज्ञोऽतिथिपूजनम् ॥७०॥

पंचैतान्योमहायज्ञान्नहापयतिशक्तितः ।
सगृहेऽपिवसन्नित्यंसूनादोषैर्नलिप्यते ॥७१॥
देवताऽतिथिभृत्यानाम्पितृणामात्मनश्चयः ।
ननिर्वपतिपंचानामुच्छ्वसन्नसजीवति ॥७२॥
अहुतंचहुतंचैवतथाप्रहुतमेवच ।
ब्राह्म्यंहुतम्प्राशितंचपंचयज्ञान्प्रचक्षते ॥७३॥
जपोऽहुतोहुतोहोमःप्रहुतोभौतिकोबलिः ।
ब्राह्म्यंहुतंद्विजाग्र्यार्चाप्राशितंपितृतर्पणं ॥७४॥
स्वाध्यायेनित्ययुक्तःस्याद्दैवेचैवेहकर्म्मणि ।
दैवेकर्म्मणियुक्तोहिबिभर्त्तीदंचराचरम् ॥७५॥
अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायतेवृष्टिर्वृष्टेरन्नन्ततःप्रजाः ॥७६॥
यथावायुंसमाश्रित्यवर्त्तन्तेसर्वजन्तवः ।
तथागृहस्थमाश्रित्यवर्त्तन्तेसर्वआश्रमाः ॥७७॥
यस्मात्त्रयोऽप्याश्रमिणोज्ञानेनान्नेनचान्वहम् ।
गृहस्थेनैवधार्यन्तेतस्माज्ज्येष्ठाश्रमोगृही ॥७८॥
ससन्धार्यःप्रयत्नेनस्वर्गमक्षयमिच्छता ।
सुखंचेहेच्छतानित्यंयोऽधार्य्योदुर्बलेन्द्रियैः ॥७९॥

ऋषयः पितरो देवा भूतान्यतिथयस्तथा ।
आशासते कुटुम्बिभ्यस्तेभ्यः कार्यं विजानता ॥८०॥
स्वाध्यायेनार्चयेतर्षीन् होमैर्देवान्यथाविधि ।
पितॄन् श्राद्धैश्च नॄनन्नैर्भूतानि बलिकर्मणा ॥८१॥
कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वाऽपि पितृभ्यः प्रीतिमावहन् ॥८२॥
एकमप्याशयेद्विप्रम्पित्रर्थे पांचयज्ञिके ।
न चैवात्राशयेत्कंचिद्वैश्वदेवम्प्रति द्विजम् ॥८३॥
वैश्वदेवस्य सिद्धस्य गृह्येऽग्नौ विधिपूर्वकम् ।
आभ्यः कुर्याद्देवताभ्यो ब्राह्मणो होममन्वहम् ॥८४॥
अग्नेः सोमस्य चैवादौ तयोश्चैव समस्तयोः ।
विश्वेभ्यश्चैव देवेभ्यो धन्वन्तरय एव च ॥८५॥
कुह्वै चैवानुमत्यै च प्रजापतय एव च ।
सह द्यावापृथिव्योश्च तथा स्विष्टकृतेऽन्ततः ॥८६॥
एवं सम्यग्घविर्हुत्वा सर्वदिक्षु प्रदक्षिणम् ।
इन्द्रान्तकाप्पतीन्दुभ्यः सानुगेभ्यो बलिं हरेत् ॥८७॥
मरुद्भ्य इति तु द्वारि क्षिपेदप्स्वद्भ्य इत्यपि ।
वनस्पतिभ्य इत्येवं मुसलोलूखले हरेत् ॥८८॥

उच्छीर्षके श्रियै कुर्याद्भद्रकाल्यै च पादतः ।
ब्रह्मवास्तोःपतिभ्यान्तु वास्तुमध्ये बलिं हरेत् ॥८९॥
विश्वेभ्यश्चैव देवेभ्यो बलिमाकाश उत्क्षिपेत् ।
दिवाचरेभ्यो भूतेभ्यो नक्तंचारिभ्य एव च ॥९०॥
पृष्ठवास्तुनि कुर्वीत बलिं सर्वात्मभूतये ।
पितृभ्यो बलिशेषन्तु सर्वं दक्षिणतो हरेत् ॥९१॥
शुनां च पतितानां च श्वपचां पापरोगिणाम् ।
वायसानां कृमीणां च शनकैर्निर्वपेद्भुवि ॥९२॥
एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति ।
स गच्छति परं स्थानन्तेजोमूर्त्तिः पथर्जुना ॥९३॥
कृत्वैतद्बलिकर्मैवमतिथिम्पूर्वमाशयेत् ।
भिक्षां च भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे ॥९४॥
यत्पुण्यफलमाप्नोति गान्दत्वा विधिवद्गुरोः ।
तत्पुण्यफलमाप्नोति भिक्षान्दत्वा द्विजो गृही ॥९५॥
भिक्षामप्युदपात्रं वा सत्कृत्य विधिपूर्वकम् ।
वेदतत्त्वार्थविदुषे ब्राह्मणायोपपादयेत् ॥९६॥
नश्यन्ति हव्यकव्यानि नराणामविजानताम् ।
भस्मीभूतेषु विप्रेषु मोहाद्दत्तानि दातृभिः ॥९७॥

विद्यातपःसमृद्धेषुहुतंविप्रमुखाग्निषु ।
निस्तारयतिदुर्गाच्चमहतश्चैवकिल्बिषात् ॥९८॥
सम्प्राप्तायत्वतिथयेप्रदद्यादासनोदके ।
अन्नंचैवयथाशक्तिसत्कृत्यविधिपूर्वकम् ॥९९॥
शिलानप्युंछतोनित्यम्पंचाग्नीनपिजुह्वतः ।
सर्वंसुकृतमादत्तेब्राह्मणोऽनर्चितोवसन् ॥१००॥
तृणानिभूमिरुदकंवाक्चतुर्थीचसूनृता ।
एतान्यपिसतांगेहेनोच्छिद्यन्तेकदाचन ॥१०१॥
एकरात्रन्तुनिवसन्नतिथिर्ब्राह्मणःस्मृतः ।
अनित्यंहिस्थितोयस्मात्तस्मादतिथिरुच्यते ॥१०२॥
नैकग्रामीणमतिथिंविप्रंसांगतिकन्तथा ।
उपस्थितंगृहेविद्याद्भार्यायत्राग्नयोऽपिवा ॥१०३॥
उपासतेयेगृहस्थाःपरपाकमबुद्धयः ।
तेनतेप्रेत्यपशुतांव्रजन्त्यन्नादिदायिनाम् ॥१०४॥
अप्रणोद्योऽतिथिःसायंसूर्य्योढोगृहमेधिना ।
कालेप्राप्तस्त्वकालेवानास्यानश्नन्गृहेवसन् ॥१०५॥
नवैस्वयन्तदश्नीयादतिथिंयन्नभोजयेत् ।
धन्यंयशस्यमायुष्यंस्वर्ग्यंवातिथिपूजनम् ॥१०६॥

आसनावसथौशय्यामनुव्रज्यामुपासनम् ।
उत्तमेषूत्तमंकुर्याद्धीनेहीनंसमेसमम् ॥१०७॥
वैश्वदेवेतुनिर्वृत्तेयद्यन्योऽतिथिराव्रजेत् ।
तस्याप्यन्नंयथाशक्तिप्रदद्यान्नबलिंहरेत् ॥१०८॥
नभोजनार्थंस्वेविप्रःकुलगोत्रेनिवेदयेत् ।
भोजनार्थंहितेशंसन्वान्ताशीत्युच्यतेबुधैः ॥१०९॥
नब्राह्मणस्यत्वतिथिर्गृहेराजन्यउच्यते ।
वैश्यशूद्रौसखाचैवज्ञातयोगुरुरेवच ॥११०॥
यदित्वतिथिधर्म्मेणक्षत्रियोगृहमाव्रजेत् ।
भुक्तवत्सूक्तविप्रेषुकामन्तमपिभोजयेत् ॥१११॥
वैश्यशूद्रावपिप्राप्तौकुटुम्बेऽतिथिधर्मिणौ ।
भोजयेत्सहभृत्यैस्तावानृशंस्यम्प्रयोजयन् ॥११२॥
इतरानपिसख्यादीन्सम्प्रीत्यागृहमागतान् ।
सत्कृत्यान्नंयथाशक्तिभोजयेत्सहभार्यया ॥११३॥
सुवासिनींकुमारीश्चरोगिणोगर्भिणीस्त्रियः ।
अतिथिभ्योऽग्रएवैतान्भोजयेदविचारयन् ॥११४॥
अदत्वातुयएतेभ्यःपूर्वम्भुंक्तेऽविचक्षणः ।
सभुंजानोनजानातिश्वगृध्रैर्जग्धिमात्मनः ॥११५॥

भुक्तवत्स्वथविप्रेषुस्वेषुभृत्येषुचैवहि ।
भुंजीयातान्ततःपश्चादवशिष्टन्तुदम्पती ॥११६॥
देवानृषीन्मनुष्यांश्चपितृन्गृह्याश्चदेवताः । ।
पूजयित्वाततःपश्चाद्गृहस्थःशेषभुग्भवेत् ॥११७॥
अघंसकेवलम्भुंक्तेयःपचत्यात्मकारणात् ।
यज्ञशिष्टाशनंह्येतत्सतामन्नंविधीयते ॥११८॥
राजर्त्विक्स्नातकगुरून्प्रियश्वशुरमातुलान् ।
अर्हयेन्मधुपर्केणपरिसंवत्सरात्पुनः ॥११९॥
राजाचश्रोत्रियश्चैवयज्ञकर्मण्युपस्थितौ ।
मधुपर्केणसम्पूज्यौनत्वयज्ञइतिस्थितिः ॥१२०॥
सायन्त्वन्नस्यसिद्धस्यपत्न्यमंत्रम्बलिंहरेत् ।
वैश्वदेवंहिनामैतत्सायम्प्रातर्विधीयते ॥१२१॥
पितृयज्ञन्तुनिर्वर्त्यविप्रश्चंद्रक्षयेऽग्निमान् ।
पिण्डान्वाहार्यकंश्राद्धंकुर्यान्मासानुमासिकं ॥१२२॥
पितॄणांमासिकंश्राद्धमन्वाहार्यंविदुर्बुधाः ।
तच्चामिषेणकर्त्तव्यम्प्रशस्तेनप्रयत्नतः ॥१२३॥
तत्रयेभोजनीयाःस्युर्येचवर्ज्याद्विजोत्तमाः ।
यावन्तश्चैवयैश्चान्नैस्तान्प्रवक्ष्याम्यशेषतः ॥१२४॥

द्वौदेवेपितृकार्येत्रीनेकैकमुभयत्रवा ।
भोजयेत्सुसमृद्धोऽपिनप्रसज्जेतविस्तरे ॥१२५॥
सत्क्रियान्देशकालौचशौचम्ब्राह्मणसम्पदः ।
पंचैतान्विस्तरोहन्तितस्मान्नेहेतविस्तरम् ॥१२६॥
प्रथिताप्रेतकृत्यैषापित्र्यंनामविधुक्षये ।
तस्मिन्युक्तस्यैतिनित्यम्प्रेतकृत्यैवलौकिकी ॥१२७॥
श्रोत्रियायैवदेयानिहव्यकव्यानिदातृभिः ।
अर्हत्तमायविप्रायतस्मैदत्तंमहाफलम् ॥१२८॥
एकैकमपिविद्वांसन्दैवेपित्र्येचभोजयेत् ।
पुष्कलम्फलमाप्नोतिनामंत्रज्ञान्बहूनपि ॥१२९॥
दूरादेवपरीक्षेतब्राह्मणंवेदपारगम् ।
तीर्थन्तद्धव्यकव्यानाम्प्रदानेसोऽतिथिःस्मृतः ॥१३०॥
सहस्रंहिसहस्राणामनृचांयत्रभुंजते ।
एकस्तान्मंत्रवित्प्रीतःसर्वानर्हतिधर्म्मतः ॥१३१॥
ज्ञानोत्कृष्टायदेयानिकव्यानिचहवींषिच ।
नहिहस्तावसृग्दिग्धौरुधिरेणैवशुध्यतः ॥१३२॥
यावतोग्रसतेग्रासान्हव्यकव्येष्वमंत्रवित् ।
तावतोग्रसतेप्रेत्यदीप्तशूलर्ष्ट्ययोगुडान् ॥१३३॥

ज्ञाननिष्ठाद्विजाःकेचित्तपोनिष्ठास्तथापरे ।
तपःस्वाध्यायनिष्ठाश्चकर्मनिष्ठास्तथापरे ॥१३४॥
ज्ञाननिष्ठेषुकव्यानिप्रतिष्ठाप्यानियत्नतः ।
हव्यानितुंयथान्यायंसर्वेष्वेवचतुर्ष्वपि ॥१३५॥
अश्रोत्रियःपितायस्यपुत्रःस्याद्वेदपारगः ।
अश्रोत्रियोवापुत्रःस्यात्पितास्याद्वेदपारगः ॥१३६॥
ज्यायांसमनयोर्विद्याद्यस्यस्याच्छ्रोत्रियःपिता ।
मंत्रसम्पूजनार्थन्तुसत्कारमितरोऽर्हति ॥१३७॥
नश्राद्धेभोजयेन्मित्रन्धनैःकार्योऽस्यसंग्रहः ।
नारिंनमित्रंयंविद्यातंश्राद्धेभोजयेद्द्विजम् ॥१३८॥
यस्यमित्रप्रधानानिश्राद्धानिचहवींषिच ।
तस्यप्रेत्यफलंनास्तिश्राद्धेषुचहविःषुच ॥१३९॥
यःसंगतानिकुरुतेमोहाच्छ्राद्धेनमानवः ।
सस्वर्गाच्च्यवतेलोकाच्छ्राद्धमित्रोद्विजाधमः ॥१४०॥
सम्भोजनीसाभिहितापैशाचीदक्षिणाद्विजैः ।
इहैवास्तेतुसालोकेगौरन्धेवैकवेश्मनि ॥१४१॥
यथेरिणेवीजमुप्त्वानवप्तालभतेफलम् ।
तथाऽनृचेहविर्दत्वानदातालभतेफलम् ॥१४२॥

दातॄन्प्रतिग्रहीतॄंश्चकुरुतेफलभागिनः ।
विदुषेदक्षिणान्दत्त्वाविधिवत्प्रेत्यचेहच ॥१४३॥
कामंश्राद्धेर्च्चयेन्मित्रंनाभिरूपमपित्वरिम् ।
द्विषताहिहविर्भुक्तम्भवतिप्रेत्यनिष्फलम् ॥१४४॥
यत्नेनभोजयेच्छ्राद्धेबह्वृचंवेदपारगम् ।
शाखान्तगमथाध्वर्युंछन्दोगन्तुसमाप्तिकम् ॥१४५॥
एषामन्यतमोयस्यभुंजीतश्राद्धमर्चितः ।
पितॄणान्तस्यतृप्तिःस्याच्छाश्वतीसाप्तपौरुषी ॥१४६॥
एषवैप्रथमःकल्पःप्रदानेहव्यकव्ययोः ।
अनुकल्पस्त्वयंज्ञेयःसदासद्भिरनुष्ठितः ॥१४७॥
मातामहंमातुलंचस्वस्रीयंश्वशुरंगुरुम् ।
दौहित्रंविट्पतिम्बन्धुमृत्विग्याज्यौचभोजयेत् ॥१४८॥
नब्राह्मणम्परीक्षेतदैवेकर्मणिधर्म्मवित् ।
पित्र्येकर्म्मणितुप्राप्तेपरीक्षेतप्रयत्नतः ॥१४९॥
येस्तेनपतितक्लीवायेचनास्तिकवृत्तयः ।
तान्हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् ॥१५०॥
जटिलंचानधीयानन्दुर्बलंकितवन्तथा ।
याजयन्तिचयेपूगांस्तांश्चश्राद्धेनभोजयेत् ॥१५१॥

चिकित्सकान्देवलकान्मांसविक्रयिणस्तथा ।
विपणेनच जीवन्तोवर्ज्याःस्युर्हव्यकव्ययोः ॥१५२॥
प्रेष्योग्रामस्यराज्ञश्चकुनखीश्यावदन्तकः ।
प्रतिरोद्धागुरोश्चैवत्यक्ताग्निर्वार्द्धुषिस्तथा ॥१५३॥
यक्ष्मीचपशुपालश्चपरिवेत्तानिराकृतिः ।
ब्रह्मद्विट्परिवित्तिश्चगणाभ्यन्तरएवच ॥१५४॥
कुशीलवोऽवकीर्णीचवृषलीपतिरेवच ।
पौनर्भवश्चकाणश्चयस्यचोपपतिर्गृहे ॥१५५॥
भृतकाध्यापकोयश्चभृतकाध्यापितस्तथा ।
शूद्रशिष्योगुरुश्चैववाग्दुष्टःकुण्डगोलकौ ॥१५६॥
अकारणपरित्यक्तामातापित्रोर्गुरोस्तथा ।
ब्राह्मैर्यौनैश्चसम्बन्धैःसंयोगंपतितैर्गतः ॥१५७॥
अगारदाहीगरदःकुण्डाशीसोमविक्रयी ।
समुद्रयायीवन्दीचतैलिकःकूटकारकः ॥१५८॥
पित्राविवदमानश्चकितवोमद्यपस्तथा ।
पापरोग्यभिशस्तश्चदाम्भिकोरसविक्रयी ॥१५९॥
धनुःशराणांकर्ताचयश्चाग्रेदिधिषूपतिः ।
मित्रध्रुग्द्यूतवृत्तिश्चपुत्राचार्यस्तथैवच ॥१६०॥

भ्रामरीगण्डमालीचश्वित्र्यथोपिशुनस्तथा ।
उन्मत्तोऽन्धश्चवर्ज्याःस्युर्वेदनिन्दकएवच ॥१६१॥
हस्तिगोऽश्वोष्ट्रदमकोनक्षत्रैर्यश्चजीवति ।
पक्षिणाम्पोषकोयश्चयुद्धाचार्यस्तथैवच ॥१६२॥
स्रोतसाम्भेदकोयश्चतेषांचावरणेरतः ।
गृहसंवेशकोदूतोवृक्षारोपकएवच ॥१६३॥
श्वक्रीडीश्येनजीवीचकन्यादूषकएवच ।
हिंस्रोवृषलवृत्तिश्चगणानांचैवयाजकः ॥१६४॥
आचारहीनःक्लीवश्चनित्यंयाचनकस्तथा ।
कृषिजीवीश्लीपदीचसद्भिर्निन्दितएवच ॥१६५॥
औरभ्रिकोमाहिषिकःपरपूर्वापतिस्तथा ।
प्रेतनिर्यातकश्चैववर्जनीयाःप्रयत्नतः ॥१६६॥
एतान्विगर्हिताचारानपांक्तेयान्द्विजाधमान् ।
द्विजातिप्रवरोविद्वानुभयत्रविवर्ज्जयेत् ॥१६७॥
ब्राह्मणस्त्वनधीयानस्तृणाग्निरिवशाम्यति ।
तस्मैहव्यंनदातव्यंनहिभस्मनिहूयते ॥१६८॥
अपांक्त्यदानेयोदातुर्भवत्यूर्ध्वम्फलोदयः ।
दैवेहविषिपित्र्येवातत्प्रवक्ष्याम्यशेषतः ॥१६९॥

अव्रतैर्यद्द्विजैर्भुक्तम्परिवेत्रादिभिस्तथा ।
अपांक्तेयैर्यदन्यैश्चतद्वैरक्षांसिभुंजते ॥१७०॥
दाराग्निहोत्रसंयोगंकुरुतेयोऽग्रजेस्थिते ।
परिवेत्तासविज्ञेयःपरिवित्तिस्तुपूर्वजः ॥१७१॥
परिवित्तिःपरीवेत्तायययाचपरिविद्यते ।
सर्वेतेनरकंयान्तिदातृयाजकपंचमाः ॥१७२॥
भ्रातुर्मृतस्यभार्यायांयोऽनुरज्येतकामतः ।
धर्म्मेणापिनियुक्तायांसज्ञेयोदिधिषूपतिः ॥१७३॥
परदारेषुजायेतेद्वौसुतौकुण्डगोलकौ ।
पत्यौजीवतिकुण्डःस्यान्मृतेभर्त्तरिगोलकः ॥१७४॥
तौतुजातौपरक्षेत्रेप्राणिनौप्रेत्यचेहच ।
दत्तानिहव्यकव्यानिनाशयेतेप्रदायिनाम् ॥१७५॥
अपांक्त्योयावतःपांक्त्यान्भुंजानाननुपश्यति ।
तावतांनफलम्प्रेत्यदाताप्राप्नोतिबालिशः ॥१७६॥
वीक्ष्यान्धोनवतेःकाणःषष्टेःश्वित्रीशतस्यतु ।
पापरोगीसहस्रस्यदातुर्नाशयतेफलम् ॥१७७॥
यावतःसंस्पृशेदंगैर्ब्राह्मणाञ्शूद्रयाजकः ।
तावतांनभवेद्दातुःफलन्दानस्यपौर्त्तिकम् ॥१७८॥

वेदविद्वापिविप्रोऽस्यलोभात्कृत्वाप्रतिग्रहम् ।
विनाशंव्रजतिक्षिप्रमामपात्रमिवाम्भसि ॥१७९॥
सोमविक्रयिणेविष्ठाभिषजेपूयशोणितम् ।
नष्टन्देवलकेदत्तमप्रतिष्ठन्तुवार्द्धुषौ ॥१८०॥
यत्तुवाणिजकेदत्तंनेहनामुत्रतद्भवेत् ।
भस्मनीवहुतंहव्यन्तथापौनर्भवेद्विजे ॥१८१॥
इतरेषुत्वपांक्त्येषुयथोद्दिष्टेष्वसाधुषु ।
मेदोऽसृङ्मांसमज्जास्थिवदन्त्यन्नंमनीषिणः ॥१८२॥
अपांक्त्योपहतापंक्तिःपाव्यतेयैर्द्विजोत्तमैः ।
तान्निबोधतकार्त्स्न्येनद्विजाग्र्यान्पंक्तिपावनान् ॥१८३॥
अग्र्याःसर्वेषुवेदेषुसर्वप्रवचनेषुच ।
श्रोत्रियान्वयजाश्चैवविज्ञेयाःपंक्तिपावनाः ॥१८४॥
त्रिणाचिकेतःपंचाग्निस्त्रिसुपर्णःषडंगवित् ।
ब्रह्मदेयात्मसन्तानोज्येष्ठसामगएवच ॥१८५॥
वेदार्थवित्प्रवक्ताचब्रह्मचारीसहस्रदः ।
शतायुश्चैवविज्ञेयाब्राह्मणाःपंक्तिपावनाः ॥१८६॥
पूर्वेद्युरपरेद्युर्वाश्राद्धकर्मण्युपस्थिते ।
निमंत्रयेतत्र्यवरान्सम्यग्विप्रान्यथोदितान् ॥१८७॥

निमंत्रितोद्विजःपित्र्येनियतात्माभवेत्सदा ।
नचछन्दांस्यधीयीतयस्यश्राद्धंचतद्भवेत् ॥१८८॥
निमंत्रितान्हिपितरउपतिष्ठन्तितान्द्विजान् ।
वायुवच्चानुगच्छन्तितथासीनानुपासते ॥१८९॥
केतितस्तुयथान्यायंहव्यकव्येद्विजोत्तमः ।
कथंचिदप्यतिक्रामन्पापःशूकरतांव्रजेत् ॥१९०॥
आमंत्रितस्तुयःश्राद्धेवृषल्यासहमोदते ।
दातुर्यद्दुष्कृतंकिंचित्तत्सर्वंप्रतिपद्यते ॥१९१॥
अक्रोधनाःशौचपराःसततम्ब्रह्मचारिणः ।
न्यस्तशस्त्रामहाभागाःपितरःपूर्वदेवताः ॥१९२॥
यस्मादुत्पत्तिरेतेषांसर्वेषामप्यशेषतः ।
येचयैरुपचर्याःस्युर्नियमैस्तान्निबोधत ॥१९३॥
मनोर्हैरण्यगर्भस्ययेमरीच्यादयःसुताः ।
तेषामृषीणांसर्वेषाम्पुत्राःपितृगणाःस्मृताः ॥१९४॥
विराट्सुताःसोमसदःसाध्यानांपितरःस्मृताः ।
अग्निष्वात्ताश्चदेवानांमारीचालोकविश्रुताः ॥१९५॥
दैत्यदानवयक्षाणांगन्धर्वोरगरक्षसाम् ।
सुपर्णकिंनराणांचस्मृताबर्हिषदोऽत्रिजाः ॥१९६॥

सोमपानामविप्राणांक्षत्रियाणांहविर्भुजः ।
वैश्यानामाज्यपानामशूद्राणान्तुसुकालिनः ॥१९७॥
सोमपास्तुकवेःपुत्राहविष्मंतोंगिरःसुताः ।
पुलस्त्यस्याज्यपाःपुत्रावशिष्ठस्यसुकालिनः ॥१९८॥
अग्निदग्धानग्निदग्धान्कायान्बर्हिषदस्तथा ।
अग्निष्वात्तांश्चसौम्यांश्चविप्राणामेवनिर्दिशेत् ॥१९९॥
यएतेतुगणामुख्याःपितॄणाम्परिकीर्त्तिताः ।
तेषामपीहविज्ञेयम्पुत्रपौत्रमनन्तकम् ॥२००॥
ऋषिभ्यःपितरोजाताःपितृभ्योदेवदानवाः ।
देवेभ्यस्तुजगत्सर्वंचरंस्थाण्वनुपूर्वशः ॥२०१॥
राजतैर्भाजनैरेषामथोवाराजतान्वितैः ।
वार्यपिश्रद्धयादत्तमक्षयायोपकल्पते ॥२०२॥
देवकार्याद्द्विजातीनाम्पितृकार्यंविशिष्यते ।
दैवंहिपितृकार्यस्यपूर्वमाप्यायनंस्मृतम् ॥२०३॥
तेषामारक्षभूतन्तुपूर्वंदैवंनियोजयेत् ।
रक्षांसिहिविलुम्पन्तिश्राद्धमारक्षवर्जितम् ॥२०४॥
दैवाद्यन्तन्तदीहेतपित्राद्यन्तंनतद्भवेत् ।
पित्राद्यन्तन्त्वीहमानःक्षिप्रंनश्यतिसान्वयः ॥२०५॥

शुचिन्देशंविविक्तंचगोमयेनोपलेपयेत् ।
दक्षिणाप्रवणंचैवप्रयत्नेनोपपादयेत् ॥२०६॥
अवकाशेषुचोक्षेषुनदीतीरेषुचैवहि ।
विविक्तेषुचतुष्यन्तिदत्तेनपितरःसदा ॥२०७॥
आसनेषूपक्लृप्तेषुबर्हिष्मत्सुपृथक्पृथक् ।
उपस्पृष्टोदकान्सम्यग्विप्रांस्तानुपवेशयेत् ॥२०८॥
उपवेश्यतुतान्विप्रानासनेष्वजुगुप्सितान् ।
गन्धमाल्यैःसुरभिभिरर्चयेद्दैवपूर्वकम् ॥२०९॥
तेषामुदकमानीयसपवित्रांस्तिलानपि ।
अग्नौकुर्यादनुज्ञातोब्राह्मणोब्राह्मणैःसह ॥२१०॥
अग्नेःसोमयमाभ्यांचकृत्वाप्यायनमादितः ।
हविर्दानेनविधिवत्पश्चात्सन्तर्पयेत्पितॄन् ॥२११॥
अग्न्यभावेतुविप्रस्यपाणावेवोपपादयेत् ।
योह्यग्निःसद्विजोविप्रैर्मन्त्रदर्शिभिरुच्यते ॥२१२॥
अक्रोधनान्सुप्रसादान्वदन्त्येतान्पुरातनान् ।
लोकस्याप्यायनेयुक्तान्श्राद्धदेवान्द्विजोत्तमान् ॥२१३॥
अपसव्यमग्नौकृत्वासर्वमावृत्यविक्रमम् ।
अपसव्येनहस्तेननिर्वपेदुदकम्भुवि ॥२१४॥

त्रींस्तुतस्माद्धविःशेषात्पिण्डान्कृत्वासमाहितः ।
औदकेनैवविधिनानिर्वपेद्दक्षिणामुखः ॥२१५॥
न्युप्यपिण्डांस्ततस्तांस्तुप्रयतोविधिपूर्वकम् ।
तेषुदर्भेषुतंहस्तंनिमृज्याल्लेपभागिनाम् ॥२१६॥
आचम्योदक्परावृत्यत्रिरायम्यशनैरसून् ।
षड्ऋतूंश्चनमस्कुर्यात्पितॄनेवचमंत्रवित् ॥२१७॥
उदकंनिनयेच्छेषंशनैःपिण्डान्तिकेपुनः ।
अवजिघ्रेच्चतान्पिण्डान्यथान्युप्तान्समाहितः ॥२१८॥
पिण्डेभ्यस्त्वल्पिकांमात्रांसमादायानुपूर्वशः ।
तानेवविप्रानासीनान्विधिवत्पूर्वमाशयेत् ॥२१९॥
ध्रियमाणेतुपितरिपूर्वेषामेवनिर्वपेत् ।
विप्रवद्वाऽपितंश्राद्धेस्वकम्पितरमाशयेत् ॥२२०॥
पितायस्यतुवृत्तःस्याज्जीवेच्चापिपितामहः ।
पितुःसनामसंकीर्त्यकीर्तयेत्प्रपितामहम् ॥२२१॥
पितामहोवातच्छ्राद्धंभुंजीतेत्यब्रवीन्मनुः ।
कामंवासमनुज्ञातःस्वयमेवसमाचरेत् ॥२२२॥
तेषान्दत्वातुहस्तेषुसपवित्रन्तिलोदकम् ।
तत्पिण्डाग्रम्प्रयच्छेतस्वधैषामस्त्वितिब्रुवन् ॥२२३॥

पाणिभ्यान्तूपसंगृह्यस्वयमन्नस्यवर्द्धिनं ।
विप्रान्तिकेपितॄन्ध्यायन्शनकैरुपनिक्षिपेत् ॥२२४॥
उभयोर्हस्तयोर्मुक्तंयदन्नमुपनीयते ।
तद्विप्रलुम्पन्त्यसुराःसहसादुष्टचेतसः ॥२२५॥
गुणांश्चसूपशाकाद्यान्पयोदधिघृतम्मधु ।
विन्यसेत्प्रयतःपूर्वम्भूमावेवसमाहितः ॥२२६॥
भक्ष्यम्भोज्यंचविविधंमूलानिचफलानिच ।
हृद्यानिचैवमांसानिपानानिसुरभीणिच ॥२२७॥
उपनीयतुतत्सर्वंशनकैःसुसमाहितः ।
परिवेषयेत्प्रयतोगुणान्सर्वान्प्रचोदयन् ॥२२८॥
नास्रमापातयेज्जातुनकुप्येन्नानृतंवदेत् ।
नपादेनस्पृशेदन्नंनचैतदवधूनयेत् ॥२२९॥
अस्रंगमयतिप्रेतान्कोपोऽरीननृतंशुनः ।
पादस्पर्शस्तुरक्षांसिदुष्कृतीनवधूननम् ॥२३०॥
यद्यद्रोचेतविप्रेभ्यस्तत्तद्दद्यादमत्सरः ।
ब्रह्मोद्याश्चकथाःकुर्यात्पितॄणामेतदीप्सितम् ॥२३१॥
स्वाध्यायंश्रावयेत्पित्र्येधर्मशास्त्राणिचैवहि ।
आख्यानानीतिहासांश्चपुराणानिखिलानिच ॥२३२॥

हर्षयेद्ब्राह्मणांस्तुष्टोभोजयेच्चशनैःशनैः ।
अन्नाद्येनासकृच्चैतान्गुणैश्चपरिचोदयेत् ॥२३३॥
व्रतस्थमपिदौहित्रंश्राद्धेयत्नेनभोजयेत् ।
कुतपंचासनंदद्यात्तिलैश्चविकिरेन्महीम् ॥२३४॥
त्रीणिश्राद्धेपवित्राणिदौहित्रःकुतपस्तिलाः ।
त्रीणिचात्रप्रशंसन्तिशौचमक्रोधमत्वराम् ॥२३५॥
अत्युष्णंसर्वमन्नंस्याद्भुंजीरंस्तेचवाग्यताः ।
नचद्विजातयोब्रूयुर्दात्रापृष्टाहविर्गुणान् ॥२३६॥
यावदुष्णम्भवत्यन्नंयावदश्नन्तिवाग्यताः ।
पितरस्तावदश्नन्तियावन्नोक्ताहविर्गुणाः ॥२३७॥
यद्वेष्टितशिराभुंक्तेयद्भुंक्तेदक्षिणामुखः ।
सोपानत्कश्चयद्भुंक्तेतद्वैरक्षांसिभुंजते ॥२३८॥
चाण्डालश्चवराहश्चकुक्कुटःश्वातथैवच ।
रजस्वलाचषंढश्चनेक्षेरन्नश्नतोद्विजान् ॥२३९॥
होमेप्रदानेभोज्येचयदेभिरभिवीक्ष्यते ।
दैवेकर्मणिपित्र्येवातद्गच्छत्ययथातथम् ॥२४०॥
घ्राणेनसूकरोहन्तिपक्षवातेनकुक्कुटः ।
श्वातुदृष्टिनिपातेनस्पर्शेनावरवर्णजः ॥२४१॥

खंजोवायदि्वाकाणोदातुःप्रेष्योऽपिवाभवेत् ।
हीनातिरिक्तगात्रोवातमप्यपनयेत्पुनः ॥२४२॥
ब्राह्मणम्भिक्षुकंवाऽपिभोजनार्थमुपस्थितम् ।
ब्राह्मणैरभ्यनुज्ञातःशक्तितःप्रतिपूजयेत् ॥२४३॥
सार्ववर्णिकमन्नाद्यंसन्नीयाप्लाव्यवारिणा ।
समुत्सृजेद्भुक्तवतामग्रतोविकिरन्भुवि ॥२४४॥
असंस्कृतप्रमीतानान्त्यागिनांकुलयोषिताम् ।
उच्छिष्टंभागधेयंस्याद्दर्भेषुविकिरश्चयः ॥२४५॥
उच्छेषणम्भूमिगतमजिह्मस्याशठस्यच ।
दासवर्गस्यतत्पित्र्येभागधेयम्प्रचक्षते ॥२४६॥
आसपिण्डक्रियाकर्मद्विजातेःसंस्थितस्यतु ।
अदैवम्भोजयेच्छ्राद्धम्पिण्डमेकन्तुनिर्वपेत् ॥२४७॥
सहपिण्डक्रियायान्तुकृतायामस्यधर्मतः ।
अनयैवावृताकार्यम्पिण्डनिर्वपणंसुतैः ॥२४८॥
श्राद्धंभुक्त्वायउच्छिष्टंवृषलायप्रयच्छति ।
समूढोनरकंयातिकालसूत्रमवाक्शिराः ॥२४९॥
श्राद्धभुग्वृषलीतल्पन्तदहर्योऽधिगच्छति ।
तस्याःपुरीषेतन्मासम्पितरस्तस्यशेरते ॥२५०॥

पृष्ट्वास्वदितमित्येवन्तृप्तानाचामयेत्ततः ।
आचान्तांश्चानुजानीयादभितोरम्यतामिति ॥२५१॥
स्वधाऽस्त्वित्येवतंब्रूयुर्ब्राह्मणास्तदनन्तरम् ।
स्वधाकारःपराह्याशीःसर्वेषुपितृकर्मसु ॥२५२॥
ततोभुक्तवतान्तेषामन्नशेषंनिवेदयेत् ।
यथाब्रूयुस्तथाकुर्यादनुज्ञातस्ततोद्विजैः ॥२५३॥
पित्र्येस्वदितमित्येववाच्यंगोष्ठेतुसुश्रुतम् ।
सम्पन्नमित्यभ्युदयेदैवेरुचितमित्यपि ॥२५४॥
अपराह्णस्तथादर्भावास्तुसम्पादनंतिलाः ।
सृष्टिर्मृष्टिर्द्विजाश्चाग्र्याःश्राद्धकर्मसुसंपदः ॥२५५॥
दर्भाःपवित्रंपूर्वाह्णोहविष्याणिचसर्वशः ।
पवित्रंयच्चपूर्वोक्तंविज्ञेयाहव्यसम्पदः ॥२५६॥
मुन्यन्नानिपयःसोमोमांसंयच्चानुपस्कृतम् ।
अक्षारलवणंचैवप्रकृत्याहविरुच्यते ॥२५७॥
विसृज्यब्राह्मणांस्तांस्तुनियतोवाग्यतःशुचिः ।
दक्षिणांदिशमाकांक्षन्याचेतेमान्वरान्पितॄन् ॥२५८॥
दातारोनोऽभिवर्द्धंतांवेदाःसन्ततिरेवच ।
श्रद्धाचनोमाव्यगमद्बहुदेयंचनोऽस्त्विति ॥२५९॥

एवंनिर्वपणंकृत्वापिण्डांस्तांस्तदनन्तरम् ।
गांविप्रमजमग्निंवाप्राशयेदप्सुवाक्षिपेत् ॥२६०॥
पिण्डनिर्वपणंकेचित्पुरस्तादेवकुर्वते ।
वयोभिःखादयन्त्यन्येप्रक्षिपन्त्यनलेऽप्सुवा ॥२६१॥
पतिव्रताधर्मपत्नीपितृपूजनतत्परा ।
मध्यमन्तुततःपिण्डमद्यात्सम्यक्सुतार्थिनी ॥२६२॥
आयुष्मन्तंसुतंसूतेयशोमेधासमन्वितम् ।
धनवन्तंप्रजावन्तंसात्त्विकंधार्मिकन्तथा ॥२६३॥
प्रक्षाल्यहस्तावाचम्यज्ञातिप्रायंप्रकल्पयेत् ।
ज्ञातिभ्यःसत्कृतन्दत्वाबान्धवानपिभोजयेत् ॥२६४॥
उच्छेषणंतुतत्तिष्ठेद्यावद्विप्राविसर्जिताः ।
ततोगृहबलिंकुर्यादितिधर्मोव्यवस्थितः ॥२६५॥
हविर्यच्चिररात्राययच्चानन्त्यायकल्पते ।
पितृभ्योविधिवद्दत्तन्तत्प्रवक्ष्याम्यशेषतः ॥२६६॥
तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेनवा ।
दत्तेनमासन्तृप्यन्तिविधिवत्पितरोनृणाम् ॥२६७॥
द्वौमासौमत्स्यमांसेनत्रीन्मासान्हारिणेनतु ।
औरभ्रेणाथचतुरःशाकुनेनाथपंचवै ॥२६८॥

षण्मासांछागमांसेनपार्षतेनचसप्तवै ।
अष्टावेणस्यमांसेनरौरवेणनवैवतु ॥२६९॥
दशमासांस्तुतृप्यन्तिवराहमहिषामिषैः ।
शशकूर्मयोस्तुमांसेनमासानेकादशैवतु ॥२७०॥
संवत्सरन्तुगव्येनपयसापायसेनच ।
वार्द्धीणसस्यमांसेनतृप्तिर्द्वादशवार्षिकी ॥२७१॥
कालशाकंमहाशल्काःखड्गलोहामिषंमधु ।
आनन्त्यायैवकल्पन्तेमुन्यन्नानिचसर्वशः ॥२७२॥
यत्किंचिन्मधुनामिश्रम्प्रदद्यात्तुत्रयोदशीम् ।
तदप्यक्षयमेवस्याद्वर्षासुचमघासुच ॥२७३॥
अपिनःसकुलेजायाद्योनोदद्यात्त्रयोदशीम् ।
पायसंमधुसर्पिर्भ्याम्प्राक्छायेकुंजरस्यच ॥२७४॥
यद्यद्ददातिविधिवत्सम्यक्श्रद्धासमन्वितः ।
तत्तत्पितृणाम्भवतिपरत्रानन्तमक्षयम् ॥२७५॥
कृष्णपक्षेदशम्यादौवर्जयित्वाचतुर्द्दशीम् ।
श्राद्धेप्रशस्तास्तिथयोयथैतानतथेतराः ॥२७६॥

युक्षुकुर्वन्दिनर्क्षेषुसर्वान्कामान्समश्नुते ।
अयुक्षुतुपितॄन्सर्वान्प्रजांप्राप्नोतिपुष्कलाम् ॥२७७॥
यथाचैवापरःपक्षःपूर्वपक्षाद्विशिष्यते ।
तथाश्राद्धस्यपूर्वाह्णादपराह्णोविशिष्यते ॥२७८॥
प्राचीनावीतिनासम्यगपसव्यमतन्द्रिणा ।
पित्र्यमानिधनात्कार्यंविधिवद्दर्भपाणिना ॥२७९॥
रात्रौश्राद्धंनकुर्वीतराक्षसीकीर्तिताहिसा ।
संध्ययोरुभयोश्चैवसूर्येचैवाचिरोदिते ॥२८०॥
अनेनविधिनाश्राद्धंत्रिरब्दस्येहनिर्वपेत् ।
हेमन्तग्रीष्मवर्षासुपांचयज्ञिकमन्वहम् ॥२८१॥
नपैतृयज्ञियोहोमोलौकिकेऽग्नौविधीयते ।
नदर्शेनविनाश्राद्धमाहिताग्नेर्द्विजन्मनः ॥२८२॥
यदेवतर्पयत्यद्भिःपितॄन्स्नात्वाद्विजोत्तमः ।
तेनैवकृत्स्नमाप्नोतिपितृयज्ञक्रियाफलम् ॥२८३॥
वसून्वदन्तितुपितॄन्रुद्रांश्चैवपितामहान् ।
प्रपितामहांस्तथादित्यान्श्रुतिरेषासनातनी ॥२८४॥

विघसाशीभवेन्नित्यंनित्यंवाऽमृतभोजनः ।
विघसोभुक्तशेषन्तुयज्ञशेषन्तथाऽमृतम् ॥२८५॥
एतद्वोऽभिहितंसर्वंविधानम्पांचयज्ञिकम् ।
द्विजातिमुख्यवृत्तीनांविधानंश्रूयतामिति ॥२८६॥

॥ इतिमानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायाम ॥
॥ तृतीयोऽध्यायः ॥



॥ मानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायांचतुर्थोऽध्यायः ॥

चतुर्थमायुषोभागमुषित्वाद्यंगुरौद्विजः ।
द्वितीयमायुषोभागंकृतदारोगृहेवसेत् ॥१॥
अद्रोहेणैवभूतानामल्पद्रोहेणवापुनः ।
यावृत्तिस्तांसमास्थायविप्रोजीवेदनापदि ॥२॥
यात्रामात्रप्रसिद्ध्यर्थंस्वैःकर्मभिरगर्हितैः ।
अक्लेशेनशरीरस्यकुर्वीतधनसंचयम् ॥३॥
ऋतामृताभ्यांजीवेत्तुमृतेनप्रमृतेनवा ।
सत्यानृताभ्यामपिवानश्ववृत्याकदाचन ॥४॥
ऋतमुञ्छशिलंज्ञेयममृतंस्यादयाचितम् ।
मृतन्तुयाचितम्भैक्षम्प्रमृतंकर्षणंस्मृतम् ॥५॥
सत्यानृतन्तुवाणिज्यन्तेनचैवापिजीव्यते ।
सेवाश्ववृत्तिराख्यातातस्मात्ताम्परिवर्ज्जयेत् ॥६॥
कुशूलधान्यकोवास्यात्कुम्भीधान्यकएववा ।
त्र्यहैहिकोवाऽपिभवेदश्वस्तनिकएववा ॥७॥

चतुर्णामपिचैतेषांद्विजानांगृहमेधिनाम् ।
ज्यायान्परःपरोज्ञेयोधर्मतोलोकजित्तमः ॥८॥
षट्कर्मैकोभवत्येषांत्रिभिरन्यःप्रवर्त्तते ।
द्वाभ्यामेकश्चतुर्थस्तुब्रह्मसत्रेणजीवति ॥९॥
वर्त्तयंश्चशिलोंछाभ्यामग्निहोत्रपरायणः ।
इष्टीःपार्वायणान्तीयाःकेवलानिर्वपेत्सदा ॥१०॥
नलोकवृत्तंवर्त्तेतवृत्तिहेतोःकथंचन ।
अजिह्मामशठांशुद्धांजीवेद्ब्राह्मणजीविकाम् ॥११॥
सन्तोषम्परमास्थायसुखार्थीसंयतोभवेत् ।
सन्तोषमूलंहिसुखंदुःखमूलंविपर्य्ययः ॥१२॥
अतोऽन्यतमयावृत्त्याजीवंस्तुस्नातकोद्विजः ।
स्वर्गायुष्ययशस्यानिव्रतानीमानिधारयेत् ॥१३॥
वेदोदितंस्वकंकर्मनित्यंकुर्यादतन्द्रितः ।
तंद्धिकुर्वन्यथाशक्तिप्राप्नोतिपरमांगतिम् ॥१४॥
नेहेतार्थान्प्रसंगेननविरुद्धेनकर्मणा ।
नकल्पमानेष्वर्थेषुनार्त्यामपियतस्ततः ॥१५॥
इन्द्रियार्थेषुसर्वेषुनप्रसज्येतकामतः ।
अतिप्रसक्तिंचैतेषाम्मनसासन्निवर्त्तयेत् ॥१६॥

सर्वान्परित्यजेदर्थान्स्वाध्यायस्यविरोधिनः ।
यथातथाऽध्यापयंस्तुसाह्यस्यकृतकृत्यता ॥१७॥
वयसःकर्मणोऽर्थस्यश्रुतस्याभिजनस्यच ।
वेषवाग्बुद्धिसारूप्यमाचरन्विचरेदिह ॥१८॥
बुद्धिवृद्धिकराण्याशुधन्यानिचहितानिच ।
नित्यंशास्त्राण्यवेक्षेतनिगमांश्चैववैदिकान् ॥१९॥
यथायथाहिपुरुषःशास्त्रंसमधिगच्छति ।
तथातथाविजानातिविज्ञानंचास्यरोचते ॥२०॥
ऋषियज्ञन्देवयज्ञम्भूतयज्ञंचसर्वदा ।
नृयज्ञम्पितृयज्ञंचयथाशक्तिनहापयेत् ॥२१॥
एतानेकेमहायज्ञान्यज्ञशास्त्रविदोजनाः ।
अनीहमानाःसततमिन्द्रियेष्वेवजुह्वति ॥२२॥
वाच्येकेजुह्वतिप्राणम्प्राणेवाचंचसर्वदा ।
वाचिप्राणेचपश्यन्तोयज्ञनिर्वृत्तिमक्षयाम् ॥२३॥
ज्ञानेनैवापरेविप्रायजन्त्येतैर्मखैःसदा ।
ज्ञानमूलांक्रियामेषाम्पश्यन्तोज्ञानचक्षुषा ॥२४॥
अग्निहोत्रंचजुहुयादाद्यन्तेद्युनिशोःसदा ।
दर्शेनचार्द्धमासान्तेपौर्णमासेनचैवहि ॥२५॥

सस्यान्तेनवसस्येष्ट्यातथर्त्वन्तेद्विजोऽध्वरैः ।
पशुनात्वयनस्यादौसमान्तेसौमिकैर्मखैः ॥२६॥
नानिष्ट्वानवसस्येष्ट्यापशुनाचाग्निमान्द्विजः ।
नवान्नमद्यान्मांसंवादीर्घमायुर्जिजीविषुः ॥२७॥
नवेनानर्चिताह्यस्यपशुहव्येनचाग्नयः ।
प्राणानेवात्तुमिच्छन्तिनवान्नामिषगर्द्धिणः ॥२८॥
आसनाशनशय्याभिरद्भिर्मूलफलेनवा ।
नास्यकश्चिद्वसेद्गेहेशक्तितोऽनर्चितोऽतिथिः ॥२९॥
पाषण्डिनोविकर्मस्थान्वैडालव्रतिकान्शठान् ।
हैतुकान्वकवृत्तींश्चवाङ्मात्रेणापिनार्चयेत् ॥३०॥
वेदविद्याव्रतस्नातान्श्रोत्रियान्गृहमेधिनः ।
पूजयेद्धव्यकव्येनविपरीतांश्चवर्जयेत् ॥३१॥
शक्तितोऽपचमानेभ्योदातव्यंगृहमेधिना ।
संविभागश्चभूतेभ्यःकर्तव्योऽनुपरोधतः ॥३२॥
राजतोधनमन्विच्छेत्संसीदन्स्नातकःक्षुधा ।
याज्यान्तेवासिनोर्वाऽपिनत्वन्यतइतिस्थितिः ॥३३॥
नसीदेत्स्नातकोविप्रःक्षुधाशक्तःकथंचन ।
नजीर्णमलवद्वासाभवेच्चविभवेसति ॥३४॥

क्लृप्तकेशनखश्मश्रुर्दान्तःशुक्लांबरःशुचिः ।
स्वाध्यायेचैवयुक्तःस्यान्नित्यमात्महितेषुच ॥३५॥
वैणवीन्धारयेद्यष्टिंसोदकंचकमण्डलुम् ।
यज्ञोपवीतंवेदंचशुभेरौक्मेचकुण्डले ॥३६॥
नेक्षेतोद्यन्तमादित्यंनास्तंयान्तंकदाचन ।
नोपसृष्टंनवारिस्थंनमध्यंनभसोगतम् ॥३७॥
नलंघयेद्वत्सतंत्रींनप्रधावेच्चवर्षति ।
नचोदकेनिरीक्षेतस्वंरूपमितिधारणा ॥३८॥
मृदंगान्दैवतंविप्रंघृतंमधुचतुष्पथम् ।
प्रदक्षिणानिकुर्वीतप्रज्ञातांश्चवनस्पतीन् ॥३९॥
नोपगच्छेत्प्रमत्तोऽपिस्त्रियमार्त्तवदर्शने ।
समानशयनेचैवनशयीततयासह ॥४०॥
रजसाऽभिप्लुतांनारींनरस्यह्युपगच्छतः ।
प्रज्ञातेजोबलंचक्षुरायुश्चैवप्रहीयते ॥४१॥
तांविवर्जयतस्तस्यरजसासमभिप्लुताम् ।
प्रज्ञातेजोबलंचक्षुरायुश्चैवप्रवर्द्धते ॥४२॥
नाश्नीयाद्भार्ययासार्द्धंनैनामीक्षेतचाश्नतीम् ।
क्षुवतींजृम्भमाणांवानचासीनांयथासुखम् ॥४३॥

नांजयन्तींस्वकेनेत्रेनचाभ्यक्तामनावृताम् ।
नपश्येत्प्रसवन्तींचतेजस्कामोद्विजोत्तमः ॥४४॥
नान्नमद्यादेकवासाननग्नःस्नानमाचरेत् ।
नमूत्रम्पथिकुर्वीतनभस्मनिनगोव्रजे ॥४५॥
नफालकृष्टेनजलेनचित्यांनचपर्वते ।
नजीर्णदेवायतनेनवल्मीकेकदाचन ॥४६॥
नससत्वेषुगर्तेषुनगच्छन्नापिचस्थितः ।
ननदीतीरमासाद्यनचपर्वतमस्तके ॥४७॥
वाय्वग्निविप्रमादित्यमपःपश्यंस्तथैवगाः ।
नकदाचनकुर्वीतविण्मूत्रस्यविसर्जनम् ॥४८॥
तिरस्कृत्योच्चरेत्काष्ठलोष्टपत्रतृणादिना ।
नियम्यप्रयतोवाचंसंवीतांगोऽवगुंठितः ॥४९॥
मूत्रोच्चारसमुत्सर्गन्दिवाकुर्यादुदङ्मुखः ।
दक्षिणाभिमुखोरात्रौसंध्ययोश्चयथादिवा ॥५०॥
छायायामन्धकारेवारात्रावहनिवाद्विजः ।
यथासुखमुखःकुर्यात्प्राणाबाधभयेषुच ॥५१॥
प्रत्यग्निम्प्रतिसूर्यंचप्रतिसोमोदकद्विजान् ।
प्रतिगाम्प्रतिवातंचप्रज्ञानश्यतिमेहतः ॥५२॥

नाग्निंमुखेनोपधमेन्नग्नांनेक्षेतचस्त्रियम्  ।
नामेध्यम्प्रक्षिपेदग्नौनचपादौप्रतापयेत्  ॥५३॥
अधस्तांन्नोपदध्याच्चनचैनमभिलंघयेत्  ।
नचैनम्पादतः कुर्यान्नप्राणाबाधमाचरेत्  ॥५४॥
नाश्नीयात्सन्धिवेलायांनगच्छेन्नापिसंविशेत्  ।
नचैवप्रलिखेद्भूमिंनात्मनोऽपहरेत्स्रजम्  ॥५५॥
नाप्सुमूत्रम्पुरीषंवाष्ठीवनंवासमुत्सृजेत्  ।
अमेध्यलिप्तमन्यद्वालोहितंवाविषाणिवा  ॥५६॥
नैकःस्वप्याच्छून्यगेहेशयानंनप्रबोधयेत्  ।
नोदक्ययाऽभिभाषेतयज्ञंगच्छेन्नचावृतः  ॥५७॥
अग्न्यागारेगवांगोष्ठेब्राह्मणानांचसन्निधौ  ।
स्वाध्यायेभोजनेचैवदक्षिणम्पाणिमुद्धरेत्  ॥५८॥
नवारयेद्गान्धयन्तींनचाचक्षीतकस्यचित्  ।
नदिवीन्द्रायुधंदृष्ट्वाकस्यचिद्दर्शयेद्बुधः  ॥५९॥
नाधार्मिकेवसेद्ग्रामेनव्याधिबहुलेभृशम्  ।
नैकःप्रपद्येताध्वानंनचिरम्पर्वतेवसेत्  ॥६०॥
नशूद्रराज्येनिवसेन्नाधार्म्मिकजनावृते  ।
नपाषण्डिगणाक्रान्तेनोपसृष्टेन्त्यजैर्नृभिः  ॥६१॥

नभुंजीतोद्धृतस्नेहंनातिसौहित्यमाचरेत् ।
नातिप्रगेनातिसायंनसायम्प्रातराशितः ॥६२॥
नकुर्वीतवृथाचेष्टांनवार्य्यंजलिनापिबेत् ।
नोत्संगेभक्षयेद्भक्ष्यान्नजातुस्यात्कुतूहली ॥६३॥
ननृत्येदथवागायेन्नवादित्राणिवादयेत् ।
नास्फोटयेन्नचक्ष्वेडेन्नचरक्तोविरावयेत् ॥६४॥
नपादौधावयेत्कांस्येकदाचिदपिभाजने ।
नभिन्नभाण्डेभुंजीतनभावप्रतिदूषिते ॥६५॥
उपानहौचवासश्चधृतमन्यैर्नधारयेत् ।
उपवीतमलंकारंस्रजंकरकमेवच ॥६६॥
नाविनीतैर्व्रजेद्धुर्य्यैर्नचक्षुद्व्याधिपीडितैः ।
नभिन्नशृंगाक्षिखुरैर्नबालधिविरूपितैः ॥६७॥
विनीतैस्तुव्रजेन्नित्यमाशुगैर्लक्षणान्वितैः ।
वर्णरूपोपसम्पन्नैःप्रतोदेनातुदन्भृशम् ॥६८॥
बालातपःप्रेतधूमोवर्ज्यंभिन्नन्तथासनम् ।
नच्छिंद्यान्नखलोमानिदन्तैर्नोत्पाटयेन्नखान् ॥६९॥
नमृल्लोष्टंविमृद्नीयान्नच्छिंद्यात्करजैस्तृणम् ।
नकर्मनिष्फलंकुर्य्यान्नायत्यामसुखोदयं ॥७०॥

लोष्टमर्द्दीतृणच्छेदीनखखादीचयोनरः ।
सविनाशंव्रजत्याशुसूचकोऽशुचिरेवच ॥७१॥
नविगर्ह्यकथांकुर्य्याद्बहिर्माल्यंनधारयेत् ।
गवांचयानंपृष्ठेनसर्वथैवविगर्हितम् ॥७२॥
अद्वारेणचनातीयाद्ग्रामंवावेश्मवावृतम् ।
रात्रौचवृक्षमूलानिदूरतःपरिवर्ज्जयेत् ॥७३॥
नाक्षैःक्रीडेत्कदाचित्तुस्वयंनोपानहौहरेत् ।
शयनस्थोनभुंजीतनपाणिस्थंनचासने ॥७४॥
सर्वंचतिलसम्बद्धन्नाद्यादस्तमितेरवौ ।
नचनग्नःशयीतेहनचोच्छिष्टःक्वचिद्व्रजेत् ॥७५॥
आर्द्रपादस्तुभुंजीतनार्द्रपादस्तुसंविशेत् ।
आर्द्रपादस्तुभुंजानोदीर्घमायुरवाप्नुयात् ॥७६॥
अचक्षुर्विषयंदुर्गंनप्रपद्येतकर्हिचित् ।
नविण्मूत्रमुदीक्षेतनबाहुभ्यांनदींतरेत् ॥७७॥
अधितिष्ठेन्नकेशांस्तुनभस्मास्थिकपालिकाः ।
नकार्पासास्थिनतुषान्दीर्घमायुर्जिजीविषुः ॥७८॥
नसंवसेच्चपतितैर्नचाण्डालैर्नपुक्कशैः ।
नमूर्खैर्नावलिप्तैश्चनान्त्यैर्नान्त्यावसायिभिः ॥७९॥

नशूद्रायमतिन्दद्यान्नोच्छिष्टंनहविष्कृतम् ।
नचास्योपदिशेद्धर्मंनचास्यव्रतमादिशेत् ॥८०॥
योह्यस्यधर्ममाचष्टेयश्चैवादिशतिव्रतम् ।
सोऽसंवृतंनामतमःसहतेनैवमज्जति ॥८१॥
नसंहताभ्याम्पाणिभ्यांकण्डूयेदात्मनःशिरः ।
नस्पृशेच्चैतदुच्छिष्टोनचस्नायाद्विनाततः ॥८२॥
केशग्रहान्प्रहारांश्चशिरस्येतान्विवर्ज्जयेत् ।
शिरःस्नातश्चतैलेननांगंकिंचिदपिस्पृशेत् ॥८३॥
नराज्ञःप्रतिगृह्णीयादराजन्यप्रसूतितः ।
शूनाचक्रध्वजवतांवेशेनैवचजीवताम् ॥८४॥
दशशूनासमंचक्रन्दशचक्रसमोध्वजः ।
दशध्वजसमोवेशोदशवेशसमोनृपः ॥८५॥
दशशूनासहस्राणियोवाहयतिशौनिकः ।
तेनतुल्यःस्मृतोराजाघोरस्तस्यप्रतिग्रहः ॥८६॥
योराज्ञःप्रतिगृह्णातिलुब्धस्योच्छास्त्रवर्तिनः ।
सपर्यायेणयातीमान्नरकानेकविंशतिम् ॥८७॥
तामिस्रमन्धतामिस्रंमहारौरवरौरवौ ।
नरकंकालसूत्रंचमहानरकमेवचं ॥८८॥

संजीवनंमहावीचिन्तपनंसम्प्रतापनम् । 
संहातंचसकाकोलंकुड्मलम्पूतिमृत्तिकम् ॥८९॥
लोहशंकुमृजीषंचपन्थानंशाल्मलींनदीम् । 
असिपत्रवनंचैवलोहदारकमेवच ॥९०॥
एतद्विदन्तोविद्वांसोब्राह्मणाब्रह्मवादिनः । 
नराज्ञःप्रतिगृह्णन्तिप्रेत्यश्रेयो ऽभिकांक्षिणः ॥९१॥
ब्राह्मेमुहूर्तेबुध्येतधर्मार्थौचानुचिन्तयेत् । 
कायक्लेशांश्चतन्मुलान्वेदतत्त्वार्थमेवच ॥९२॥
उत्थायावश्यकंकृत्वाकृतशौचःसमाहितः । 
पूर्वांसंध्यांजपंस्तिष्ठेत्स्वकालेचापरांचिरम् ॥९३॥
ऋषयोदीर्घसंध्यत्वाद्दीर्घमायुरवाप्नुयुः । 
प्रज्ञांयशश्चकीर्तिंचब्रह्मवर्चसमेवच ॥९४॥
श्रावण्याम्प्रौष्ठपद्यांवा ऽप्युपाकृत्ययथाविधि । 
युक्तश्छन्दांस्यधीयीतमासान्विप्रो ऽर्द्धपंचमान् ॥९५॥
पुष्येतुच्छन्दसांकुर्याद्बहिरुत्सर्जनंद्विजः । 
माघशुक्लस्यवाप्राप्तेपूर्वाह्णेप्रथमे ऽहनि ॥९६॥
यथाशास्त्रन्तुकृत्वैवमुत्सर्गंछन्दसांवहिः । 
विरमेत्पक्षिणींरात्रिन्तद्वा ऽप्येकमहर्निशम् ॥९७॥

अतऊर्द्ध्वन्तुच्छन्दांसिशुक्लेषुनियतःपठेत् ।
वेदांगानिचसर्वाणिकृष्णपक्षेषुसम्पठेत् ॥९८॥
नाविस्पष्टमधीयीतनशूद्रजनसन्निधौ ।
ननिशान्तेपरिश्रान्तोब्रह्माधीत्यपुनःस्वपेत् ॥९९॥
यथोदितेनविधिनानित्यंछन्दस्कृतम्पठेत् ।
ब्रह्मच्छन्दस्कृतंचैवद्विजोयुक्तोह्यनापदि ॥१००॥
इमान्नित्यमनध्यायानधीयानोविवर्जयेत् ।
अध्यापनंचकुर्वाणःशिष्याणांविधिपूर्वकम् ॥१०१॥
कर्णश्रवेऽनिलेरात्रौदिवापांसुसमूहने ।
एतौवर्षास्वनध्यायावध्यायज्ञाःप्रचक्षते ॥१०२॥
विद्युत्स्तनितवर्षेषुमहोल्कानांचसंप्लवे ।
आकालिकमनध्यायमेतेषुमनुरब्रवीत् ॥१०३॥
एतांस्त्वभ्युदितान्विद्याद्यदाप्रादुष्कृताग्निषु ।
तदाविद्यादनध्यायमनृतौचाभ्रदर्शने ॥१०४॥
निर्घातेभूमिचलनेज्योतिषांचोपसर्ज्जने ।
एतानाकालिकान्विद्यादनध्यायानृतावपि ॥१०५॥
प्रादुष्कृतेष्वग्निषुतुविद्युत्स्तनितनिस्वने ।
सज्योतिःस्यादनध्यायःशेषेरात्रौयथादिवा ॥१०६॥

नित्यानध्यायएवस्याद्ग्रामेषुनगरेषुच ।
धर्म्मनैपुण्यकामानाम्पूतिगन्धेचसर्वदा ॥१०७॥
अन्तर्गतशवेग्रामेवृषलस्यचसन्निधौ ।
अनध्यायोरुद्यमानेसमवायेजनस्यच ॥१०८॥
उदकेमध्यरात्रेचविण्मूत्रस्यविसर्ज्जने ।
उच्छिष्टःश्राद्धभुक्चैवमनसाऽपिनचिन्तयेत् ॥१०९॥
प्रतिगृह्यद्विजोविद्वानेकोद्दिष्टस्यकेतनम् ।
त्र्यहंनकीर्तयेद्ब्रह्मराज्ञोराहोश्चसूतके ॥११०॥
यावदेकानुदिष्टस्यगन्धोलेपश्चतिष्ठति ।
विप्रस्यविदुषोदेहेतावद्ब्रह्मनकीर्तयेत् ॥१११॥
शयानःप्रौढपादश्चकृत्वाचैवावसक्थिकाम् ।
नाधीयीतामिषंजग्ध्वासूतकान्नाद्यमेवच ॥११२॥
नीहारेवाणशब्देचसंध्ययोरेवचोभयोः ।
अमावास्याचतुर्दश्योःपौर्णमास्यष्टकासुच ॥११३॥
अमावास्यागुरुंहन्तिशिष्यंहन्तिचतुर्दशी ।
ब्रह्माष्टकापौर्णमास्यौतस्मात्ताःपरिवर्जयेत् ॥११४॥
पांशुवर्षेदिशान्दाहेगोमायुविरुतेतथा ।
श्वखरोष्ट्रेचरुवतिपंक्तौचनपठेद्द्विजः ॥११५॥

नाधीयीतश्मशानान्तेग्रामान्तेगोव्रजेऽपिवा ।
वसित्वामैथुनंवासःश्राद्धिकम्प्रतिगृह्यच ॥११६॥
प्राणिवायदिवाऽप्राणियत्किंचिच्छ्राद्धिकंभवेत् ।
तदालभ्याप्यनध्यायःपाण्यास्योहिद्विजःस्मृतः ॥११७॥
चौरैरुपप्लुतेग्रामेसंभ्रमेचाग्निकारिते ।
आकालिकमनध्यायंविद्यात्सर्वाद्भुतेषुच ॥११८॥
उपाकर्म्मणिचोत्सर्गेत्रिरात्रंक्षेपणंस्मृतम् ।
अष्टकासुत्वहोरात्रमृत्वन्तासुचरात्रिषु ॥११९॥
नाधीयीताश्वमारूढोनवृक्षंनचहस्तिनम् ।
ननावंनखरंनोष्ट्रंनेरिणस्थोनयानगः ॥१२०॥
नविवादेनकलहेनसेनायांनसंगरे ।
नभुक्तमात्रेनाजीर्णेनवमित्वानसूतके ॥१२१॥
अतिथिंचाननुज्ञाप्यमारुतेवातिवाभृशम् ।
रुधिरेचस्रुतेगात्राच्छस्त्रेणचपरिक्षते ॥१२२॥
सामध्वनावृग्यजुषीनाधीयीतकदाचन ।
वेदस्याधीत्यवाऽप्यन्तमारण्यकमधीत्यच ॥१२३॥
ऋग्वेदोदेवदैवत्योयजुर्वेदस्तुमानुषः ।
सामवेदःस्मृतःपित्र्यस्तस्मात्तस्याशुचिर्ध्वनिः ॥१२४॥

एतद्विदन्तोविद्वांसस्त्रयीनिष्कर्षमन्वहम् ।
क्रमशःपूर्वमभ्यस्यपश्चाद्वेदमधीयते ॥१२५॥
पशुमण्डूकमार्जारश्वसर्पनकुलाखुभिः ।
अन्तरागमनेविद्यादनध्यायमहर्न्निशम् ॥१२६॥
द्वावेववर्जयेन्नित्यमनध्यायौप्रयत्नतः ।
स्वाध्यायभूमिंचाशुद्धामात्मानंचाशुचिंद्विजः ॥१२७॥
अमावस्यामष्टमींचपौर्णमासींचतुर्द्दशीम् ।
ब्रह्मचारीभवेन्नित्यमप्यृतौस्नातकोद्विजः ॥१२८॥
नस्नानमाचरेद्भुक्त्वानातुरोनमहानिशि ।
नवासोभिःसहाजस्रंनाविज्ञातेजलाशये ॥१२९॥
देवतानांगुरोराज्ञःस्नातकाचार्ययोस्तथा ।
नाक्रामेत्कामतश्छायांबभ्रुणोदीक्षितस्यच ॥१३०॥
मध्यन्दिनेर्द्धरात्रेचश्राद्धम्भुक्त्वाचसामिषम् ।
संध्ययोरुभयोश्चैवनसेवेतचतुष्पथम् ॥१३१॥
उद्वर्त्तनमपस्नानंविण्मूत्रेरक्तमेवच ।
श्लेष्मनिष्ठ्यूतवान्तानिनाधितिष्ठेत्तुकामतः ॥१३२॥
वैरिणंनोपसेवेतसहायंचैववैरिणः ।
अधार्मिकन्तस्करंचपरस्यैवचयोषितम् ॥१३३॥

नहीदृशमनायुष्यंलोकेकिंचनविद्यते ।
यादृशम्पुरुषस्येहपरदारोपसेवनम् ॥१३४॥
क्षत्रियंचैवसर्पंचब्राह्मणंचबहुश्रुतम् ।
नावमन्येतवैभूष्णुःकृशानपिकदाचन ॥१३५॥
एतत्त्रयंहिपुरुषंनिर्द्दहेदवमानितम् ।
तस्मादेतत्त्रयंनित्यंनावमन्येतबुद्धिमान् ॥१३६॥
नात्मानमवमन्येतपूर्वाभिरसमृद्धिभिः ।
आमृत्योःश्रियमन्विच्छेन्नैनांमन्येतदुर्ल्लभाम् ॥१३७॥
सत्यंब्रूयात्प्रियंब्रूयान्नब्रूयात्सत्यमप्रियम् ।
प्रियंचनानृतंब्रूयादेषधर्म्मःसनातनः ॥१३८॥
भद्रम्भद्रमितिब्रूयाद्भद्रमित्येववावदेत् ।
शुष्कवैरंविवादंचनकुर्यात्केनचित्सह ॥१३९॥
नातिकल्यंनातिसायंनात्तिमध्यन्दिनेस्थिते ।
नाज्ञातेनसमंगच्छेन्नैकोनवृषलैःसह ॥१४०॥
हीनांगानतिरिक्तांगान्विद्याहीनान्वयोऽधिकान् ।
रूपद्रव्यविहीनांश्चजातिहीनांश्चनाक्षिपेत् ॥१४१॥
नस्पृशेत्पाणिनोच्छिष्टोविप्रोगोब्राह्मणानलान् ।
नचापिपश्येदशुचिःसुस्थोज्योतिर्गणान्दिवि ॥१४२॥

स्पृष्ट्वैतानशुचिर्नित्यमद्भिःप्राणानुपस्पृशेत् ।
गात्राणिचैवसर्वाणिनाभिम्पाणितलेनतु ॥१४३॥
अनातुरःस्वानिखानिनस्पृशेदनिमित्ततः ।
रोमाणिचरहस्यानिसर्वाण्येवविवर्जयेत् ॥१४४॥
मंगलाचारयुक्तःस्यात्प्रयतात्माजितेन्द्रियः ।
जपेच्चजुहुयाच्चैवनित्यमग्निमतन्द्रितः ॥१४५॥
मंगलाचारयुक्तानांनित्यंचप्रयतात्मनाम् ।
जपतांजुह्वतांचैवविनिपातोनविद्यते ॥१४६॥
वेदमेवाभ्यसेन्नित्यंयथाकालमतन्द्रितः ।
तंह्यस्याहुःपरन्धर्ममुपधर्म्मोऽन्यउच्यते ॥१४७॥
वेदाभ्यासेनसततंशौचेनतपसेवच ।
अद्रोहेणचभूतानांजातिंस्मरतिपौर्विकीम् ॥१४८॥
पौर्विकींसंस्मरन्जातिम्ब्रह्मैवाभ्यसतेपुनः ।
ब्रह्माभ्यासेनचाजस्रमनन्तंसुखमश्नुते ॥१४९॥
सावित्राञ्शान्तिहोमांश्चकुर्यात्पर्वसुनित्यशः ।
पितॄंश्चैवाष्टकास्वर्चेन्नित्यमन्वष्टकासुच ॥१५०॥
दूरादावसथान्मूत्रंदूरात्पादावसेचनम् ।
उच्छिष्टान्नन्निषेकंचदूरादेवसमाचरेत् ॥१५१॥

मैत्रम्प्रसाधनंस्नानन्दन्तधावनमंजनम् ।
पूर्वाह्णएवकुर्वीतदेवतानांचपूजनम् ॥१५२॥
दैवतान्यभिगच्छेत्तुधार्मिकांश्चद्विजोत्तमान् । ।
ईश्वरंचैवरक्षार्थंगुरूनेवचपर्वसु ॥१५३॥
अभिवादयेद्वृद्धांश्चदद्याच्चैवासनंस्वकम् ।
कृतांजलिरुपासीतगच्छतःपृष्ठतोऽन्वियात् ॥१५४॥
श्रुतिस्मृत्युदितंसम्यङ्निबद्धंस्वेषुकर्मसु ।
धर्ममूलन्निषेवेतसदाचारमतन्द्रितः ॥१५५॥
आचाराल्लभतेह्यायुराचारादीप्सिताःप्रजाः ।
आचाराद्धनमक्षय्यमाचारोहन्त्यलक्षणम् ॥१५६॥
दुराचारोहिपुरुषोलोकेभवतिनिन्दितः ।
दुःखभागीचसततंव्याधितोऽल्पायुरेवच ॥१५७॥
सर्वलक्षणहीनोऽपियःसदाचारवान्नरः ।
श्रद्दधानोऽनसूयश्चशतंवर्षाणिजीवति ॥१५८॥
यद्यत्परवशंकर्मतत्तद्यत्नेनवर्जयेत् ।
यद्यदात्मवशन्तुस्यात्तत्तत्सेवेतयत्नतः ॥१५९॥
सर्वम्परवशन्दुःखंसर्वमात्मवशंसुखम् ।
एतद्विद्यात्समासेनलक्षणंसुखदुःखयोः ॥१६०॥

यत्कर्म्मकुर्वतोऽस्यस्यात्परितोषोऽन्तरात्मनः ।
तत्प्रयत्नेनकुर्वीतविपरीतन्तुवर्ज्जयेत् ॥१६१॥
आचार्य्यंचप्रवक्तारम्पितरम्मातरंगुरुम् ।
नहिंस्याद्ब्राह्मणान्गाश्चसर्वांश्चैवतपस्विनः ॥१६२॥
नास्तिक्यंवेदनिन्दांचदेवतानांचकुत्सनम् ।
द्वेषन्दम्भंचमानंचक्रोधन्तैक्ष्ण्यंचवर्जयेत् ॥१६३॥
परस्यदण्डंनोद्यच्छेत्क्रुद्धोनैनंनिपातयेत् ।
अन्यत्रपुत्राच्छिष्याद्वाशिष्ट्यर्थन्ताडयेत्तुतौ ॥१६४॥
ब्राह्मणायावगुर्य्यैवद्विजातिर्वधकाम्यया ।
शतंवर्षाणितामिस्रेनरकेपरिवर्त्तते ॥१६५॥
ताडयित्वातृणेनापिसंरम्भान्मतिपूर्वकम् ।
एकविंशतमाजातीःपापयोनिषुजायते ॥१६६॥
अयुध्यमानस्योत्पाद्यब्राह्मणस्याऽसृगंगतः ।
दुःखंसुमहदाप्नोतिप्रेत्याप्राज्ञतयानरः ॥१६७॥
शोणितंयावतःपांशून्संगृह्णातिमहीतलात् ।
तावतोऽब्दानमुत्रान्यैःशोणितोत्पादकोऽद्यते ॥१६८॥
नकदाचिद्द्विजेतस्माद्विद्वानवगुरेदपि ।
नताडयेत्तृणेनापिनगात्रात्स्रावयेदसृक् ॥१६९॥

अधार्मिकोनरोयोहियस्यचाप्यनृतन्धनम् ।
हिंसारतश्चयोनित्यन्नेहासौसुखमेधते ॥१७०॥
नसीदन्नपिधर्मेणमनोऽधर्मेनिवशयेत् ।
अधार्मिकाणाम्पापानामाशुपश्यन्विपर्ययम् ॥१७१॥
नाधर्मश्चरितोलोकेसद्यःफलतिगौरिव ।
शनैरावर्त्तमानस्तुकर्त्तुर्मूलानिकृन्तति ॥१७२॥
यदिनात्मनिपुत्रेषुनचेत्पुत्रेषुनप्तृषु ।
नत्वेवतुकृतोऽधर्म्मःकर्त्तुर्भवतिनिष्फलः ॥१७३॥
अधर्म्मेणैधतेतावत्ततोभद्राणिपश्यति ।
ततःसपत्नान्जयतिसमूलस्तुविनश्यति ॥१७४॥
सत्यधर्मार्य्यवृत्तेषुशौचेचैवारमेत्सदा ।
शिष्यांश्चशिष्याद्धर्मेणवाग्बाहूदरसंयतः ॥१७५॥
परित्यजेदर्थकामौयौस्यातान्धर्मवर्जितौ ।
धर्मंचाप्यसुखोदर्कंलोकविक्रुष्टमेवच ॥१७६॥
नपाणिपादचपलोननेत्रचपलोऽनृजुः ।
नस्याद्वाक्चपलश्चैवनपरद्रोहकर्मधीः ॥१७७॥
येनास्यपितरोयातायेनयाताःपितामहाः ।
तेनयायात्सतांमार्गन्तेनगच्छन्नरिष्यते ॥१७८॥

ऋत्विक्पुरोहिताचार्य्यैर्मातुलातिथिसंश्रितैः ।
बालवृद्धातुरैर्वैद्यैर्ज्ञातिसम्बन्धिबान्धवैः ॥१७९॥
मातापितृभ्यांयामीभिर्भ्रात्रापुत्रेणभार्य्यया ।
दुहित्रादासवर्गेणविवादंनसमाचरेत् ॥१८०॥
एतैर्विवादान्सन्त्यज्यसर्वपापैःप्रमुच्यते ।
एभिर्जितैश्चजयतिसर्वान्लोकानिमान्गृही ॥१८१॥
आचार्य्योब्रह्मलोकेशःप्राजापत्येपिताप्रभुः ।
अतिथिस्त्विंद्रलोकेशोदेवलोकस्यचर्त्विजः ॥१८२॥
यामयोऽप्सरसांलोकेवैश्वदेवस्यबान्धवाः ।
सम्बन्धिनोह्यपांलोकेपृथिव्यांमातृमातुलौ ॥१८३॥
आकाशेशास्तुविज्ञेयाबालवृद्धकृशातुराः ।
भ्राताज्येष्ठःसमःपित्राभार्य्यापुत्रःस्वकातनुः ॥१८४॥
छायास्वादासवर्गश्चदुहिताकृपणम्परम् ।
तस्मादेतैरधिक्षिप्तःसहेतासंज्वरःसदा ॥१८५॥
प्रतिग्रहसमर्थोऽपिप्रसंगन्तत्रवर्जयेत् ।
प्रतिग्रहेणह्यस्याशुब्राह्मन्तेजःप्रशाम्यति ॥१८६॥
नद्रव्याणामविज्ञायविधिन्धर्म्यम्प्रतिग्रहे ।
प्राज्ञःप्रतिग्रहंकुर्य्यादवसीदन्नपिक्षुधा ॥१८७॥

हिरण्यंभूमिमश्वंगामन्नंवासस्तिलान्घृतम् ।
प्रतिगृह्णन्नविद्वांस्तुभस्मीभवतिदारुवत् ॥१८८॥
हिरण्यमायुरन्नंचभूर्गौश्चाप्योषतस्तनुम् ।
अश्वश्चक्षुस्त्वचंवासोघृतन्तेजस्तिलाःप्रजाः ॥१८९॥
अतपास्त्वनधीयानःप्रतिग्रहरुचिर्द्विजः ।
अम्भस्यश्मप्लवेनेवसहतेनैवमज्जति ॥१९०॥
तस्मादविद्वान्बिभियाद्यस्मात्तस्मात्प्रतिग्रहात् ।
स्वल्पकेनाप्यविद्वान्हिपंकेगौरिवसीदति ॥१९१॥
नवार्यपिप्रयच्छेत्तुवैडालव्रतिकेद्विजे ।
नवकव्रतिकेविप्रेनावेदविदिधर्मवित् ॥१९२॥
त्रिष्वप्येतेषुदत्तंहिविधिनाऽप्यर्जितन्धनम् ।
दातुर्भवत्यनर्थायपरत्रादातुरेवच ॥१९३॥
यथाप्लवेनौपलेननिमज्जत्युदकेतरन् ।
तथानिमज्जतोऽधस्तादज्ञौदातृप्रतीच्छकौ ॥१९४॥
धर्मध्वजीसदालुब्धश्छाद्मिकोलोकदम्भकः ।
वैडालव्रतिकोज्ञेयोहिंस्रःसर्वाभिसन्धकः ॥१९५॥
अधोदृष्टिर्नैष्कृतिकःस्वार्थसाधनतत्परः ।
शठोमिथ्याविनीतश्चबकव्रतचरोद्विजः ॥१९६॥

येवकव्रतिनोविप्रायेचमार्ज्जारलिंगिनः । 
तेपतन्त्यन्धतामिस्रेतेनपापेनकर्म्मणा ॥१९७॥
नधर्म्मस्यापदेशेनपापंकृत्वाव्रतंचरेत् । 
व्रतेनपापम्प्रच्छाद्यकुर्वन्स्त्रीशूद्रदम्भनम् ॥१९८॥
प्रेत्येहचेदृशाविप्रागर्ह्यन्तेब्रह्मवादिभिः । 
छद्मनाचरितंयच्चव्रतंरक्षांसिगच्छति ॥१९९॥
अलिंगीलिंगिवेषेणयोवृत्तिमुपजीवति । 
सलिंगिनांहरत्येनस्तिर्य्यग्योनौचजायते ॥२००॥
परकीयनिपानेषुनस्नायाच्चकदाचन । 
निपानकर्त्तुःस्नात्वातुदुष्कृतांशेनलिप्यते ॥२०१॥
यानशय्यासनान्यस्यकूपोद्यानगृहाणिच । 
अदत्तान्युपभुंजानएनसःस्यात्तुरीयभाक् ॥२०२॥
नदीषुदेवखातेषुतडागेषुसरःसुच । 
स्नानंसमाचरेन्नित्यंगर्त्तप्रस्रवणेषुच ॥२०३॥
यमान्सेवेतसततंननित्यंनियमान्बुधः । 
यमान्पतत्यकुर्वाणोनियमान्केवलान्भजन् ॥२०४॥
नाश्रोत्रियततेयज्ञेग्रामयाजिकृतेतथा । 
स्त्रियाक्लीवेनचहुतेभुंजीतब्राह्मणःक्वचित् ॥२०५॥

अश्लीकमेतत्साधूनांयत्रजुह्वत्यमीहविः । 
प्रतीपमेतद्देवानान्तस्मात्तत्परिवर्ज्जयेत् ॥२०६॥
मत्तक्रुद्धातुराणांचनभुंजीतकदाचन । 
केशकीटावपन्नंचपदास्पृष्टंचकामतः ॥२०७॥
भ्रूणघ्नावेक्षितंचैवसंस्पृष्टंचाप्युदक्यया । 
पतत्रिणाऽवलीढंचशुनासंस्पृष्टमेवच ॥२०८॥
गवाचान्नमुपघ्रातंघुष्टान्नंचविशेषतः । 
गणान्नंगणिकान्नंचविदुषांचजुगुप्सितम् ॥२०९॥
स्तेनगायनयोश्चान्नन्तक्ष्णोर्वार्द्धुषिकस्यच । 
दीक्षितस्यकदर्यस्यबद्धस्यनिगडस्यच ॥२१०॥
अभिशस्तस्यषंढस्यपुंश्चल्यादाम्भिकस्यच । 
शुक्तम्पर्युषितंचैवशूद्रस्योच्छिष्टमेवच ॥२११॥
चिकित्सकस्यमृगयोःक्रूरस्योच्छिष्टभोजिनः । 
उग्रान्नंसूतिकान्नंचपर्याचान्तमनिर्दशं ॥२१२॥
अनर्चितंवृथामांसमवीरायाश्चयोषितः । 
द्विषदन्नंनगर्य्यन्नम्पतितान्नमवक्षुतम् ॥२१३॥
पिशुनानृतिनोश्चान्नंक्रतुविक्रयिणस्तथा । 
तुन्नवायान्नंकृतघ्नस्यान्नमेवच ॥२१४॥

कर्म्मारस्यनिषादस्यरंगावतारकस्यच ।
सुवर्णकर्त्तुर्वैणस्यशस्त्रविक्रयिणस्तथा ॥२१५॥
श्ववतांशौण्डिकानांचचेलनिर्णेजकस्यच ।
रंजकस्यनृशंसस्ययस्यचोपपतिर्गृहे ॥२१६॥
मृष्यन्तियेचोपपतिंस्त्रीजितानांचसर्वशः ।
अनिर्दशंचप्रेतान्नमतुष्टिकरमेवच ॥२१७॥
राजान्नन्तेजआदत्तेशूद्रान्नम्ब्रह्मवर्चसम् ।
आयुःसुवर्णकारान्नंयशश्चर्मावकर्त्तिनः ॥२१८॥
कारुकान्नम्प्रजांहन्तिबलंनिर्णेजकस्यच ।
गणान्नंगणिकान्नंचलोकेभ्यःपरिकृन्तति ॥२१९॥
पूयंचिकित्सकस्यान्नम्पुंश्चल्यास्त्वन्नमिन्द्रियं ।
विष्ठावार्द्धुषिकस्यान्नंशस्त्रविक्रयिणोमलं ॥२२०॥
यएभ्योऽन्येत्वभोज्यान्नाःक्रमशःपरिकीर्त्तिताः ।
तेषान्त्वगस्थिरोमाणिवदन्त्यन्नंमनीषिणः ॥२२१॥
भुक्त्वातोऽन्यतमस्यान्नममत्याक्षपणंत्र्यहम् ।
मत्याभुक्त्वाचरेत्कृच्छ्रंरेतोविण्मूत्रमेवच ॥२२२॥
नाद्याच्छूद्रस्यपक्वान्नंविद्वानश्राद्धिनोद्विजः ।
आददीताममेवास्मादवृत्तावेकरात्रिकं ॥२२३॥

श्रोत्रियस्यकदर्य्यस्यवदान्यस्यचवार्द्धुषेः ।
मीमांसित्वोभयन्देवाःसममन्नमकल्पयन् ॥२२४॥
तान्प्रजापतिराहैत्यमाकृढ्वंविषमंसमम् ।
श्रद्धापूतंवदान्यस्यहतमश्रद्धयेतरत् ॥२२५॥
श्रद्धयेष्टंचपूर्त्तंचनित्यंकुर्य्यादतन्द्रितः ।
श्रद्धाकृतेह्यक्षयेतेभवतःस्वागतैर्द्धनैः ॥२२६॥
दानधर्म्मंनिषेवेतनित्यमैष्टिकपौर्त्तिकम् ।
परितुष्टेनभावेनपात्रमासाद्यशक्तितः ॥२२७॥
यत्किंचिदपिदातव्यंयाचितेनानसूयया ।
उत्पत्स्यतेहितत्पात्रंयत्तारयतिसर्वतः ॥२२८॥
वारिदस्तृप्तिमाप्नोतिसुखमक्षय्यमन्नदः ।
तिलप्रदःप्रजामिष्टांदीपदश्चक्षुरुत्तमम् ॥२२९॥
भूमिदोभूमिमाप्नोतिदीर्घमायुर्हिरण्यदः ।
गृहदोऽग्र्याणिवेश्मानिरूप्यदोरूपमुत्तमं ॥२३०॥
वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः ।
अनडुहःश्रियंपुष्टांगोदोब्रघ्नस्यपिष्टपं ॥२३१॥
यानशय्याप्रदोभार्य्यामैश्वर्य्यमभयप्रदः ।
धान्यदःशाश्वतंसौख्यंब्रह्मदोब्रह्मसार्ष्टिताम् ॥२३२॥

सर्वेषामेवदानानाम्ब्रह्मदानंविशिष्यते ।
वार्य्यन्नगोमहीवासस्तिलकांचनसर्पिषाम् ॥२३३॥
येनयेनतुभावेनयद्यद्दानंप्रयच्छति ।
तत्तत्तेनैवभावेनप्राप्नोतिप्रतिपूजितः ॥२३४॥
योऽर्चितम्प्रतिगृह्णातिददात्यर्चितमेवच ।
तावुभौगच्छतःस्वर्गन्नरकन्तुविपर्यये ॥२३५॥
नविस्मयेततपसावदेदिष्ट्वाचनानृतम् ।
नार्तोऽप्यपवदेद्विप्रान्नदत्वापरिकीर्तयेत् ॥२३६॥
यज्ञोऽनृतेनक्षरतितपःक्षरतिविस्मयात् ।
आयुर्विप्रापवादेनदानंचपरिकीर्तनात् ॥२३७॥
धर्म्मंशनैःसंचिनुयाद्वल्मीकमिवपुत्तिकाः ।
परलोकसहायार्थंसर्वभूतान्यपीडयन् ॥२३८॥
नामुत्रहिसहायार्थम्पितामाताचतिष्ठतः ।
नपुत्रदारन्नज्ञातिर्धर्म्मस्तिष्ठतिकेवलः ॥२३९॥
एकःप्रजायतेजन्तुरेकएवप्रलीयते ।
एकोऽनुभुंक्तेसुकृतमेकएवचदुष्कृतम् ॥२४०॥
मृतंशरीरमुत्सृज्यकाष्ठलोष्टसमंक्षितौ ।
विमुखाबांधवायान्तिधर्म्मस्तमनुगच्छति ॥२४१॥

तस्माद्धर्मंसहायार्थंनित्यंसंचिनुयाच्छनैः ।
धर्म्मेणहिसहायेनतमस्तरतिदुस्तरम् ॥२४२॥
धर्मप्रधानम्पुरुषन्तपसाहतकिल्विषम् ।
परलोकन्नयत्याशुभास्वन्तंखशरीरिणम् ॥२४३॥
उत्तमैरुत्तमैर्न्नित्यंसम्बन्धानाचरेत्सह ।
निनीषुःकुलमुत्कर्षमधमानधमांस्त्यजेत् ॥२४४॥
उत्तमानुत्तमान्गच्छन्हीनान्हीनांश्चवर्जयन् ।
ब्राह्मणःश्रेष्ठतामेतिप्रत्यवायेनशूद्रताम् ॥२४५॥
दृढकारीमृदुर्दान्तःक्रूराचारैरसंवसन् ।
अहिंस्रोदमदानाभ्यांजयेत्स्वर्गन्तथाव्रतः ॥२४६॥
एधोदकंमूलफलमन्नमभ्युद्यतंचयत् ।
सर्वतःप्रतिगृह्णीयान्मध्वथाभयदक्षिणाम् ॥२४७॥
आहृताभ्युद्यताम्भिक्षांपुरस्तादप्रचोदिताम् ।
मेनेप्रजापतिर्ग्राह्यामपिदुष्कृतकर्मणः ॥२४८॥
नाश्नन्तिपितरस्तस्यदशवर्षाणिपंचच ।
नचहव्यंवहत्यग्निर्यस्तामभ्यवमन्यते ॥२४९॥
शय्यांगृहान्कुशान्गंधानपःपुष्पंमणीन्दधि ।
धानामत्स्यान्पयोमांसंशाकंचैवननिर्णुदेत् ॥२५०॥

गुरून्भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन्देवतातिथीन् ।
सर्वतःप्रतिगृह्णीयान्नतुतृप्येत्स्वयन्ततः ॥२५१॥
गुरुषुत्वभ्यतीतेषुविनावातैर्गृहेवसन् ।
आत्मनोवृत्तिमन्विच्छन्गृह्णीयात्साधुतःसदा ॥२५२॥
आर्द्धिकःकुलमित्रंचगोपालोदासनापितौ ।
एतेशूद्रेषुभोज्यान्नायश्चात्मानंनिवेदयेत् ॥२५३॥
यादृशोऽस्यभवेदात्मायादृशंचचिकीर्षितम् ।
यथाचोपचरेदेनन्तथात्मानंनिवेदयेत् ॥२५४॥
योऽन्यथासन्तमात्मानमन्यथासत्सुभाषते ।
सपापकृत्तमोलोकेस्तेनआत्मापहारकः ॥२५५॥
वाच्यर्थानियताःसर्वेवाङ्मूलावाग्विनिःसृताः ।
तान्तुयःस्तेनयेद्वाचंससर्वस्तेयकृन्नरः ॥२५६॥
महर्षिपितृदेवानांगत्वानृण्यंयथाविधि ।
पुत्रेसर्वंसमासज्यवसेन्माध्यस्थमाश्रितः ॥२५७॥
एकाकीचिन्तयेन्नित्यंविविक्तेहितमात्मनः ।
एकाकीचिन्तयानोहिपरंश्रेयोऽधिगच्छति ॥२५८॥
एषोदितागृहस्थस्यवृत्तिर्विप्रस्यशाश्वती ।
स्नातकव्रतकल्पश्चसत्त्ववृद्धिकरःशुभः ॥२५९॥

अनेनविप्रोवृत्तेनवर्त्तयन्वेदशास्त्रवित् ।
व्यपेतकल्मषोनित्यम्ब्रह्मलोकेमहीयते ॥२६०॥

॥ इतिमानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायाम् ॥
॥ चतुर्थोऽध्यायः ॥



॥ मानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायांपंचमोऽध्यायः ॥

श्रुत्वैतानृषयोधर्मान्स्नातकस्ययथोदितान् ।
इदमूचुर्महात्मानमनलप्रभवम्भृगुम् ॥१॥
एवंयथोक्तंविप्राणांस्वधर्म्ममनुतिष्ठताम् ।
कथंमृत्युःप्रभवतिवेदशास्त्रविदाम्प्रभो ॥२॥
सतानुवाचधर्मात्मामहर्षीन्मानवोभृगुः ।
श्रूयतांयेनदोषेणमृत्युर्विप्रान्जिघांसति ॥३॥
अनभ्यासेनवेदानामाचारस्यचवर्जनात् ।
आलस्यादन्नदोषाच्चमृत्युर्विप्रान्जिघांसति ॥४॥
लशुनंगृंजनंचैवपलाण्डुंकवकानिच ।
अभक्ष्याणिद्विजातीनाममेध्यप्रभवाणिच ॥५॥
लोहितान्वृक्षनिर्यासान्व्रश्चनप्रभवांस्तथा ।
शेलुंगव्यंचपेयूषम्प्रयत्नेनविवर्जयेत् ॥६॥
वृथाकृसरसंयावम्पायसापूपमेवच ।
अनुपाकृतमांसानिदेवान्नानिहवींषिच ॥७॥

अनिर्द्दशायागोःक्षीरमौष्ट्रमैकशफन्तथा ।
आविकंसन्धिनीक्षीरंविवत्सायाश्चगोःपयः ॥८॥
आरण्यानांचसर्वेषांमृगाणांमाहिषंविना ।
स्त्रीक्षीरंचैववर्ज्यानिसर्वशुक्तानिचैवहि ॥९॥
दधिभक्ष्यंचशुक्तेषुसर्वंचदधिसम्भवम् ।
यानिचैवाभिषूयन्तेपुष्पमूलफलैःशुभैः ॥१०॥
क्रव्यादान्शकुनीन्सर्वांस्तथाग्रामनिवासिनः ।
अनिर्दिष्टांश्चैकशफांष्टिट्टिभंचविवर्जयेत् ॥११॥
कलविंकंप्लवंहंसंचक्रांगंग्रामकुक्कुटम् ।
सारसंरज्जुवालंचदात्यूहंशुकसारिके ॥१२॥
प्रतुदान्जालपादांश्चकोयष्टिनखविष्किरान् ।
निमज्जतश्चमत्स्यादान्शौनंवल्लूरमेवच ॥१३॥
वकंचैवबलाकांचकाकोलंखंजरीटकम् ।
मत्स्यादान्विड्वराहांश्चमत्स्यानेवचसर्वशः ॥१४॥
योयस्यमांसमश्नातिसतन्मांसादउच्यते ।
मत्स्यादःसर्वमांसादस्तस्मान्मत्स्यान्विवर्ज्जयेत् ॥१५॥
पाठीनरोहितावाद्यौनियुक्तौहव्यकव्ययोः ।
राजीवान्सिंहतुण्डांश्चसशल्कांश्चैवसर्वशः ॥१६॥

नभक्षयेदेकचरानज्ञातांश्चमृगद्विजान् ।
भक्ष्येष्वपिसमुद्दिष्टान्सर्वान्पंचनखांस्तथा ॥१७॥
श्वाविधंशल्यकंगोधांखड्गकूर्म्मशशांस्तथा ।
भक्ष्यान्पंचनखेष्वाहुरनुष्ट्रांश्चैकतोदतः ॥१८॥
छत्राकंविड्वराहंचलशुनंग्रामकुक्कुटम् ।
पलाण्डुंगृंजनंचैवमत्याजग्ध्वापतेद्द्विजः ॥१९॥
अमत्यैतानिषड्जग्ध्वाकृच्छ्रंसान्तपनंचरेत् ।
यदिचान्द्रायणंवाऽपिशेषेषूपवसेदहः ॥२०॥
संवत्सरस्यैकमपिचरेत्कृच्छ्रंद्विजोत्तमः ।
अज्ञातभुक्तशुद्ध्यर्थंज्ञातस्यतुविशेषतः ॥२१॥
यज्ञार्थंब्राह्मणैर्वध्याःप्रशस्तामृगपक्षिणः ।
भृत्यानांचैववृत्त्यर्थमगस्त्योह्याचरत्पुरा ॥२२॥
बभूवुर्हिपुरोडाशाभक्ष्याणांमृगपक्षिणाम् ।
पुराणेष्वपियज्ञेषुब्रह्मक्षत्रसवेषुच ॥२३॥
यत्किंचित्स्नेहसंयुक्तम्भक्ष्यम्भोज्यमगर्हितम् ।
तत्पर्युषितमप्याद्यंहविःशेषंचयद्भवेत् ॥२४॥
चिरस्थितमपित्वाद्यमस्नेहाक्तंद्विजातिभिः ।
यवगोधूमजंसर्वम्पयसश्चैवविक्रियाः ॥२५॥

एतदुक्तंद्विजातीनाम्भक्ष्याभक्ष्यमशेषतः ।
मांसस्यातःप्रवक्ष्यामिविधिम्भक्षणवर्जने ॥२६॥
प्रोक्षितम्भक्षयेन्मांसम्ब्राह्मणानांचकाम्यया ।
यथाविधिनियुक्तस्तुप्राणानामेवचात्यये ॥२७॥
प्राणस्यान्नमिदंसर्वंप्रजापतिरकल्पयत् ।
स्थावरंजंगमंचैवसर्वंप्राणस्यभोजनम् ॥२८॥
चराणामन्नमचरादंष्ट्रिणामप्यदंष्ट्रिणः ।
अहस्ताश्चसहस्तानांशूराणांचैवभीरवः ॥२९॥
नात्तादुष्यत्यदन्नाद्यान्प्राणिनोऽहन्यहन्यपि ।
धात्रैवसृष्टाह्याद्याश्चप्राणिनोऽत्तारएवच ॥३०॥
यज्ञायजग्धिर्मांसस्येत्येषदैवोविधिःस्मृतः ।
अतोऽन्यथाप्रवृत्तिस्तुराक्षसोविधिरुच्यते ॥३१॥
क्रीत्वास्वयंवाऽप्युत्पाद्यपरोपकृतमेववा ।
देवान्पितॄंश्चार्चयित्वाखादन्मांसंनदुष्यति ॥३२॥
नाद्यादविधिनामांसंविधिज्ञोऽनापदिद्विजः ।
जग्ध्वाह्यविधिनामांसम्प्रेत्यतैरद्यतेऽवशः ॥३३॥
नतादृशम्भवत्येनोमृगहन्तुर्धनार्थिनः ।
यादृशम्भवतिप्रेत्यवृथामांसानिखादतः ॥३४॥

नियुक्तस्तुयथान्यायंयोमांसंनात्तिमानवः ।
सप्रेत्यपशुतांयातिसम्भवानेकविंशतिम् ॥३५॥
असंस्कृतान्पशून्मंत्रैर्नाद्याद्विप्रःकदाचन ।
मंत्रैस्तुसंस्कृतानद्याच्छाश्वतंविधिमास्थितः ॥३६॥
कुर्याद्घृतपशुंसंगेकुर्यात्पिष्टपशुन्तथा ।
नत्वेवतुवृथाहन्तुम्पशुमिच्छेत्कदाचन ॥३७॥
यावन्तिपशुरोमाणितावत्कृत्वोहमारणम् ।
वृथापशुघ्नःप्राप्नोतिप्रेत्यजन्मनिजन्मनि ॥३८॥
यज्ञार्थम्पशवःसृष्टाःस्वयमेवस्वयम्भुवा ।
यज्ञोऽस्यभूत्यैसर्वस्यतस्माद्यज्ञेबधोऽबधः ॥३९॥
ओषध्यःपशवोवृक्षास्तिर्यंचःपक्षिणस्तथा ।
यज्ञार्थंनिधनम्प्राप्ताःप्राप्नुवन्त्युच्छ्रितीःपुनः ॥४०॥
मधुपर्केचयज्ञेचपितृदैवतकर्म्मणि ।
अत्रैबपशवोहिंस्यानान्यत्रेत्यब्रवीन्मनुः ॥४१॥
एष्वर्थेषुपशून्हिंसन्वेदतत्त्वार्थविद्द्विजः ।
आत्मानंचपशूंश्चैवगमयत्युत्तमांगतिम् ॥४२॥
गृहेगुरावरण्येवानिवसन्नात्मवान्द्विजः ।
नावेदविहितांहिंसामापद्यपिसमाचरेत् ॥४३॥

यावेदविहिताहिंसानियताऽस्मिंश्चराचरे ।
अहिंसामेवतांविद्याद्वेदाद्धर्मोहिनिर्बभौ ॥४४॥
योऽहिंसकानिभूतानिहिनस्त्यात्मसुखेच्छया ।
सजीवंश्चमृतश्चैवनकुचित्सुखमेधते ॥४५॥
योबन्धनबधक्लेशान्प्राणिनान्नचिकीर्षति ।
ससर्वस्यहितप्रेप्सुःसुखमत्यन्तमश्नुते ॥४६॥
यद्ध्यायतियत्कुरुतेरतिम्बध्नातियत्रच ।
तदवाप्नोत्ययत्नेनयोहिनस्तिनकिंचन ॥४७॥
नाकृत्वाप्राणिनांहिंसाम्मांसमुत्पद्यतेक्वचित् ।
नचप्राणिबधःस्वर्ग्यस्तस्मान्मांसंविवर्ज्जयेत् ॥४८॥
समुत्पत्तिंचमांसस्यबधबन्धौचदेहिनाम् ।
प्रसमीक्ष्यनिवर्त्तेतसर्वमांसस्यभक्षणात् ॥४९॥
नभक्षयतियोमांसंविधिंहित्वापिशाचवत् ।
सलोकेप्रियतांयातिव्याधिभिश्चनपीड्यते ॥५०॥
अनुमन्ताविशसितानिहन्ताक्रयविक्रयी ।
संस्कर्त्ताचोपहर्त्ताचखादकश्चेतिघातकाः ॥५१॥
स्वमांसम्परमांसेनयोवर्द्धयितुमिच्छति ।
अनभ्यर्च्यपितॄन्देवान्स्ततोऽन्योनास्त्यपुण्यकृत् ॥५२॥

वर्षेवर्षेऽश्वमेधेनयोयजेतशतंसमाः ।
मांसानिचनखादेद्यस्तयोःपुण्यफलंसमम् ॥५३॥
फलमूलाशनैर्मेध्यैर्मुन्यन्नानांचभोजनैः ।
नतत्फलमवाप्नोतियन्मांसपरिवर्ज्जनात् ॥५४॥
मांसभक्षयिताऽमुत्रयस्यमांसमिहाद्म्यहम् ।
एतन्मांसस्यमांसत्वम्प्रवदन्तिमनीषिणः ॥५५॥
नमांसभक्षणेदोषोनमद्येनचमैथुने ।
प्रवृत्तिरेषाभूतानान्निवृत्तिस्तुमहाफला ॥५६॥
प्रेतशुद्धिम्प्रवक्ष्यामिद्रव्यशुद्धिन्तथैवच ।
चतुर्णामपिवर्णानांयथावदनुपूर्वशः ॥५७॥
दन्तजातेऽनुजातेचकृतचूडेचसंस्थिते ।
अशुद्धाबान्धवाःसर्वेसूतकेचतथोच्यते ॥५८॥
दशाहंशावमाशौचंसपिण्डेषुविधीयते ।
आर्वाक्संचयनादस्थ्नांत्र्यहमेकाहमेवच ॥५९॥
सपिण्डतातुपुरुषेसप्तमेविनिवर्त्तते ।
समानोदकभावस्तुजन्मनाम्नोरवेदने ॥६०॥
यथेदंशावमाशौचंसपिण्डेषुविधीयते ।
जननेऽप्येवमेवस्यान्निपुणांशुद्धिमिच्छताम् ॥६१॥

सर्वेषांशावमाशौचंमातापित्रोस्तुसूतकम् ।
सूतकंमातुरेवस्यादुपस्पृश्यपिताशुचिः ॥६२॥
निरस्यतुपुमाञ्छुक्रमुपस्पृश्यैवशुध्यति ।
बैजिकादभिसम्बंधादनुरुंध्यादघंत्र्यहम् ॥६३॥
अह्नाचैकेनरात्र्याचत्रिरात्रैरेवचत्रिभिः ।
शवस्पृशोविशुध्यन्तित्र्यहादुदकदायिनः ॥६४॥
गुरोःप्रेतस्यशिष्यस्तुपितृमेधंसमाचरन् ।
प्रेतहारैःसमन्तत्रदशरात्रेणशुध्यति ॥६५॥
रात्रिभिर्मासतुल्याभिगर्भस्रावेविशुध्यति ।
रजस्युपरतेसाध्वीस्नानेनस्त्रीरजस्वला ॥६६॥
नृणामकृतचूडानांविशुद्धिर्नैशिकीस्मृता ।
निर्वृत्तचूडकानान्तुत्रिरात्राच्छुद्धिरिष्यते ॥६७॥
ऊनद्विवार्षिकम्प्रेतन्निदध्युर्बान्धवावहिः ।
अलंकृत्यशुचौभूमावस्थिसंचयनादृते ॥६८॥
नास्यकार्य्योऽग्निसंस्कारोनचकार्य्योदकक्रिया ।
अरण्येकाष्ठवत्त्यक्त्वाक्षपेयुस्त्र्यहमेवच ॥६९॥
नात्रिवर्षस्यकर्तव्याबान्धवैरुदकक्रिया ।
जातदन्तस्यवाकुर्युर्नाम्निवाऽपिकृतेसति ॥७०॥

सब्रह्मचारिण्येकाहमतीतेक्षपणंस्मृतम् ।
जन्मन्येकोदकानान्तुत्रिरात्राच्छुद्धिरिष्यते ॥७१॥
स्त्रीणामसंस्कृतानान्तुत्र्यहाच्छुध्यन्तिबान्धवाः ।
यथोक्तेनैवकल्पेनशुध्यन्तितुसनाभयः ॥७२॥
अक्षारलवणान्नाःस्युर्निमज्जेयुश्चतेत्र्यहम् ।
मांसाशनंचनाश्नीयुःशयीरंश्चपृथक्क्षितौ ॥७३॥
सन्निधावेषवैकल्पःशावाशौचस्यकीर्त्तितः ।
असन्निधावयंज्ञेयोविधिःसम्बन्धिबान्धवैः ॥७४॥
विगतन्तुविदेशस्थंशृणुयाद्योह्यनिर्दशम् ।
यच्छेषन्दशरात्रस्यतावदेवाशुचिर्भवेत् ॥७५॥
अतिक्रान्तेदशाहेचत्रिरात्रमशुचिर्भवेत् ।
संवत्सरेव्यतीतेतुस्पृष्ट्वैवापोविशुध्यति ॥७६॥
निर्दशंज्ञातिमरणंश्रुत्वापुत्रस्यजन्मच ।
सवासाजलमाप्लुत्यशुद्धोभवतिमानवः ॥७७॥
बालेदेशान्तरस्थेचपृथक्पिण्डेचसंस्थिते ।
सवासांजलमाप्लुत्यसद्यएवविशुध्यति ॥७८॥
अन्तर्दशाहेस्यातांचेत्पुनर्मरणजन्मनी ।
तावत्स्यादशुचिर्विप्रोयावत्तत्स्यादनिर्दशम् ॥७९॥

त्रिरात्रमाहुराशौचमाचार्य्येसंस्थितेसति ।
तस्यपुत्रेचपत्न्यांचदिवारात्रमितिस्थितिः ॥८०॥
श्रोत्रियेतूपसम्पन्नेत्रिरात्रमशुचिर्भवेत् ।
मातुलेपक्षिणींरात्रिंशिष्यर्त्विग्बान्धवेषुच ॥८१॥
प्रेतेराजनिसज्योतिर्य्यस्यस्याद्विषयेस्थितः ।
अश्रोत्रियेत्वहःकृत्स्नमनूचानेतथागुरौ ॥८२॥
शुध्येद्विप्रोदशाहेनद्वादशाहेनभूमिपः ।
वैश्यःपंचदशाहेनशूद्रोमासेनशुध्यति ॥८३॥
नवर्द्धयेदघाहानिप्रत्यूहेन्नाग्निषुक्रियाः ।
नचतत्कर्म्मकुर्वाणःसनाभ्योऽप्यशुचिर्भवेत् ॥८४॥
दिवाकीर्त्तिमुदक्यांचपतितंसूतिकान्तथा ।
शवन्तत्स्पृष्टिनंचैवस्पृष्ट्वास्नानेनशुध्यति ॥८५॥
आचम्यप्रयतोनित्यंजपेदशुचिदर्शने ।
सौरान्मंत्रान्यथोत्साहम्पावमानीश्चशक्तितः ॥८६॥
नारंस्पृष्ट्वाऽस्थिसस्नेहंस्नात्वाविप्रोविशुध्यति ।
आचम्यैवतुनिःस्नेहंगामालभ्यार्कमीक्ष्यवा ॥८७॥
आदिष्टीनोदकंकुर्य्यादाव्रतस्यसमापनात् ।
समाप्तेतूदकंकृत्वात्रिरात्रेणैवशुध्यति ॥८८॥

वृथासंकरजातानाम्प्रव्रज्यासुचतिष्ठताम् ।
आत्मनस्त्यागिनांचैवनिवर्त्ततोदकक्रिया ॥८९॥
पाषण्डमाश्रितानांचचरन्तीनांचकामतः ।
गर्भभर्तृद्रुहांचैवसुरापीनांचयोषिताम् ॥९०॥
आचार्य्यंस्वमुपाध्यायम्पितरम्मातरंगुरूम् ।
निर्हृत्यतुव्रतीप्रेतान्नव्रतेनवियुज्यते ॥९१॥
दक्षिणेनमृतंशूद्रम्पुरद्वारेणनिर्हरेत् ।
पश्चिमोत्तरपूर्वैस्तुयथायोगंद्विजन्मनः ॥९२॥
नराज्ञामघदोषोऽस्तिव्रतिनान्नचसत्रिणाम् ।
ऐन्द्रंस्थानमुपासीनाब्रह्मभूताहितेसदा ॥९३॥
राज्ञोमाहात्मिकेस्थानेसद्यःशौचंविधीयते ।
प्रजानाम्परिरक्षार्थमासनंचान्नकारणम् ॥९४॥
डिम्बाहवहतानांचविद्युतापार्थिवेनच ।
गोब्राह्मणस्यचैवार्थेयस्यचेच्छतिपार्थिवः ॥९५॥
सोमाग्न्यर्कानिलेन्द्राणांवित्ताप्पत्योर्यमस्यच ।
अष्टानांलोकपालानांवपुर्धारयतेनृपः ॥९६॥
लोकेशाधिष्ठितोराजानास्याशौचंविधीयते ।
शौचाशौचंहिमर्त्यानांलोकेशप्रभवाप्ययम् ॥९७॥

उद्यतैराहवेशस्त्रैःक्षत्रधर्महतस्यच ।
सद्यःसन्तिष्ठतेयज्ञस्तथाशौचमितिस्थितिः ॥९८॥
विप्रःशुध्यत्यपःस्पृष्ट्वाक्षत्रियोवाहनायुधम् ।
वैश्यःप्रतोदंरश्मीन्वायष्टिंशूद्रःकृतक्रियः ॥९९॥
एतद्वोऽभिहितंशौचंसपिण्डेषुद्विजोत्तमाः ।
असपिण्डेषुसर्वेषुप्रेतशुद्धिंनिबोधत ॥१००॥
असपिण्डंद्विजम्प्रेतंविप्रोनिर्हृत्यबन्धुवत् ।
विशुध्यतित्रिरात्रेणमातुराप्तांश्चबान्धवान् ॥१०१॥
यद्यन्नमत्तितेषान्तुदशाहेनैवशुध्यति ।
अनदन्नन्नमह्नैवनचेत्तस्मिन्गृहेवसेत् ॥१०२॥
अनुगम्येच्छयाप्रेतंज्ञातिमज्ञातिमेववा ।
स्नात्वासचैलःस्पृष्ट्वाऽग्निंघृतम्प्राश्यविशुध्यति ॥१०३॥
नविप्रंस्वेषुतिष्ठत्सुमृतंशूद्रेणनाययेत् ।
अस्वर्ग्याह्याहुतिःसास्याच्छूद्रसंस्पर्शदूषिता ॥१०४॥
ज्ञानन्तपोऽग्निराहारोमृन्मनोवार्य्युपांजनम् ।
वायुःकर्मार्ककालौचशुद्धेःकर्तॄणिदेहिनाम् ॥१०५॥
सर्वेषामेवशौचानामर्थशौचम्परंस्मृतम् ।
योऽर्थेशुचिर्हिसशुचिर्नमृद्वारिशुचिःशुचिः ॥१०६॥

क्षान्त्याशुध्यन्तिविद्वांसोदानेनाकार्यकारिणः ।
प्रच्छन्नपापाजप्येनतपसावेदवित्तमाः ॥१०७॥
मृत्तोयैःशुध्यतेशोध्यंनदीवेगेनशुध्यति ।
रजसास्त्रीमनोदुष्टासंन्यासेनद्विजोत्तमः ॥१०८॥
अद्भिर्गात्राणिशुध्यन्तिमनःसत्येनशुध्यति ।
विद्यातपोभ्याम्भूतात्माबुद्धिर्ज्ञानेनशुध्यति ॥१०९॥
एषशौचस्यवःप्रोक्तःशारीरस्यविनिर्णयः ।
नानाविधानान्द्रव्याणांशुद्धेःशृणुतनिर्णयम् ॥११०॥
तैजसानांमणीनांचसर्वस्याश्ममयस्यच ।
भस्मनाऽद्भिर्मृदाचैवशुद्धिरुक्तामनीषिभिः ॥१११॥
निर्लेपंकांचनम्भाण्डमद्भिरेवविशुध्यति ।
अब्जमश्ममयंचैवराजतंचानुपस्कृतम् ॥११२॥
अपामग्नेश्चसंयोगाद्धेमरूप्यंचनिर्बभौ ।
तस्मात्तयोःस्वयोन्यैवनिर्णेकोगुणवत्तरः ॥११३॥
ताम्रायःकांस्यरैत्यानांत्रपुणःसीसकस्यच ।
शौचंयथार्हंकर्तव्यंक्षाराम्लोदकवारिभिः ॥११४॥
द्रवाणांचैवसर्वेषांशुद्धिरुत्पवनंस्मृतम् ।
प्रोक्षणंसंहतानांचदारवाणांचतक्षणम् ॥११५॥

माज्र्जनंयज्ञपात्राणांपाणिनायज्ञकर्म्मणि ।
चमसानांग्रहाणांचशुद्धिःप्रक्षालनेनतु ॥११६॥
चरूणांस्रुक्स्रुवाणांचशुद्धिरुष्णेनवारिणा ।
स्फ्यशूर्पशकटानांचमुसलोलूखलस्यच ॥११७॥
अद्भिस्तुप्रोक्षणंशौचम्बहूनान्धान्यवाससाम् ।
प्रक्षालनेनत्वल्पानामद्भिःशौचंविधीयते ॥११८॥
चैलवच्चर्मणांशुद्धिर्वैदलानान्तथैवच ।
शाकमूलफलानांचधान्यवच्छुद्धिरिष्यते ॥११९॥
कौशेयाविकयोरूषैःकुतपानामरिष्टकैः ।
श्रीफलैरंशुपट्टानांक्षौमाणांगौरसर्षपैः ॥१२०॥
क्षौमवच्छंखशृंगाणामस्थिदन्तमयस्यच ।
शुद्धिर्विजानताकार्यागोमूत्रेणोदकेनवा ॥१२१॥
प्रोक्षणात्तृणकाष्ठंचपलालंचैवशुध्यति ।
माज्र्जनोपांजनैर्वेश्मपुनःपाकेनमृन्मयम् ॥१२२॥
मद्यैर्मूत्रैःपुरीषैर्वाष्ठीवनैःपूयशोणितैः ।
संस्पृष्टंनैवशुध्येतपुनःपाकेनमृन्मयम् ॥१२३॥
संमार्जनोपांजनेनसेकेनोल्लेखनेनच ।
गवांचपरिवासेनभूमिःशुध्यन्तिपंचभिः ॥१२४॥

पक्षिजग्धंगवाघ्रातमवधूतमवक्षुतम् ।
दूषितंकेशकीटैश्चमृत्प्रक्षेपेणशुध्यति ॥१२५॥
यावन्नापैत्यमेध्याक्ताद्गन्धोलेपश्चतत्कृतः ।
तावन्मृद्वारिचादेयंसर्वासुद्रव्यशुद्धिषु ॥१२६॥
त्रीणिदेवाःपवित्राणिब्राह्मणानामकल्पयन् ।
अदृष्टमद्भिर्निर्णिक्तंयच्चवाचाप्रशस्यते ॥१२७॥
आपःशुद्धाभूमिगतावैतृष्ण्यंयासुगोर्भवेत् ।
अव्याप्ताश्चेदमेध्येनगन्धवर्णरसान्विताः ॥१२८॥
नित्यंशुद्धःकारुहस्तःपण्यंयच्चप्रसारितम् ।
ब्रह्मचारिगतम्भैक्ष्यंनित्यंमेध्यमितिस्थितिः ॥१२९॥
नित्यमास्यंशुचिस्त्रीणांशकुनिःफलपातने ।
प्रस्रवेचशुचिर्वत्सःश्वामृगग्रहणेशुचिः ॥१३०॥
श्वभिर्हतस्ययन्मांसंशुचितन्मनुरब्रवीत् ।
क्रव्याद्भिश्चहतस्यान्यैश्चण्डालाद्यैश्चदस्युभिः ॥१३१॥
ऊर्द्ध्वंनाभेर्यानिखानितानिमेध्यानिसर्वशः ।
यान्यधस्तान्यमेध्यानिदेहाच्चैवमलाश्च्युताः ॥१३२॥
मक्षिकाविप्रुषश्छायागौरश्वःसूर्यरश्मयः ।
रजोभूर्वायुरग्निश्चस्पर्शेमेध्यानिनिर्दिशेत् ॥१३३॥

विण्मूत्रोत्सर्गशुद्ध्यर्थंमृद्वार्यादेयमर्थवत् ।
दैहिकानांमलानांचशुद्धिषुद्वादशस्वपि ॥१३४॥
वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविण्नखाः ।
श्लेष्माश्रुदूषिंकास्वेदोद्वादशैतेनृणांमलाः ॥१३५॥
एकालिंगेगुदेतिस्रस्तथैकत्रकरेदश ।
उभयोःसप्तदातव्यामृदःशुद्धिमभीप्सता ॥१३६॥
एतच्छौचंगृहस्थानांद्विगुणंब्रह्मचारिणाम् ।
त्रिगुणंस्याद्वनस्थानांयतीनान्तुचतुर्गुणम् ॥१३७॥
कृत्वामूत्रम्पुरीषंवाखान्याचान्तउपस्पृशेत् ।
वेदमध्येष्यमाणश्चअन्नमश्नंश्चसर्वदा ॥१३८॥
त्रिराचामेदपःपूर्वंद्विःप्रमृज्यात्ततोमुखम् ।
शारीरंशौचमिच्छन्हिस्त्रीशूद्रस्तुसकृत्सकृत् ॥१३९॥
शूद्राणांमासिकंकार्यंवपनंन्यायवर्त्तिनाम् ।
वैश्यवच्छौचकल्पश्चद्विजोच्छिष्टंचभोजनम् ॥१४०॥
नोच्छिष्टंकुर्वतेमुख्याविप्रुषोऽङ्गेपतन्तियाः ।
नश्मश्रूणिगतान्यास्यन्नदन्तान्तरधिष्ठितम् ॥१४१॥
स्पृशन्तिविन्दवःपादौयआचामयतःपरान् ।
भौमिकैस्तेसमाज्ञेयानतैरप्रयतोभवेत् ॥१४२॥

उच्छिष्टेनतुसंस्पृष्टोद्रव्यहस्तःकथंचन ।
अनिधायैवतद्द्रव्यमाचान्तःशुचितामियात् ॥१४३॥
वान्तोविरिक्तःस्नात्वातुघृतप्राशनमाचरेत् ।
आचामेदेवभुक्त्वाऽन्नंस्नानंमैथुनिनःस्मृतम् ॥१४४॥
सुप्त्वाक्षुत्वाचभुक्त्वाचनिष्ठीव्योक्त्वाऽनृतानिच ।
पीत्वाऽपोऽध्येष्यमाणश्चआचामेत्प्रयतोऽपिसन् ॥१४५॥
एषशौचविधिःकृत्स्नोद्रव्यशुद्धिस्तथैवच ।
उक्तोवःसर्ववर्णानांस्त्रीणान्धर्मान्निबोधत ॥१४६॥
बालयावायुवत्यावावृद्धयावाऽपियोषिता ।
नस्वातंत्र्येणकर्त्तव्यंकिंचित्कार्यंगृहेष्वपि ॥१४७॥
बाल्येपितुर्वशेतिष्ठेत्पाणिग्राहस्ययौवने ।
पुत्राणाम्भर्त्तरिप्रेतेनभजेत्स्त्रीस्वतंत्रताम् ॥१४८॥
पित्राभर्त्रासुतैर्वाऽपिनेच्छेद्विरहमात्मनः ।
एषांहिविरहेणस्त्रीगर्ह्येकुर्यादुभेकुले ॥१४९॥
सदाप्रहृष्टयाभाव्यंगृहकार्येषुदक्षया ।
सुसंस्कृतोपस्करयाव्ययेचामुक्तहस्तया ॥१५०॥
यस्मैदद्यात्पितात्वेनांभ्रातावाऽनुमतेपितुः ।
तंशुश्रूषेतजीवन्तंसंस्थितंचनलंघयेत् ॥१५१॥

मंगलार्थंस्वस्त्ययनंयज्ञश्चासाम्प्रजापतेः ।
प्रयुज्यतेविवाहेषुप्रदानंस्वाम्यकारणम् ॥१५२॥
अनृतावृतुकालेचमंत्रसंस्कारकृत्पतिः ।
सुखस्यनित्यन्दातेहपरलोकेचयोषितः ॥१५३॥
विशीलःकामवृत्तोवागुणैर्वापरिवर्ज्जितः ।
उपचर्यःस्त्रियासाध्व्यासततन्देववत्पतिः ॥१५४॥
नास्तिस्त्रीणाम्पृथग्यज्ञोनव्रतन्नाप्युपोषितम् ।
पतिंशुश्रूषतेयेनतेनस्वर्गेमहीयते ॥१५५॥
पाणिग्राहस्यसाध्वीस्त्रीजीवतोवामृतस्यवा ।
पतिलोकमभीप्सन्तीनाचरेत्किंचिदप्रियम् ॥१५६॥
कामन्तुक्षपयेद्देहम्पुष्पमूलफलैःशुभैः ।
नतुनामापिगृह्णीयात्पत्यौप्रेतेपरस्यतु ॥१५७॥
आसीतामरणात्क्षान्तानियताब्रह्मचारिणी ।
योधर्मएकपत्नीनांकांक्षन्तीतमनुत्तमम् ॥१५८॥
अनेकानिसहस्राणिकुमारब्रह्मचारिणाम् ।
दिवंगतानिविप्राणामकृत्वाकुलसन्ततिम् ॥१५९॥
मृतेभर्त्तरिसाध्वीस्त्रीब्रह्मचर्य्येव्यवस्थिता ।
स्वर्गंगच्छत्यपुत्राऽपियथातेब्रह्मचारिणः ॥१६०॥

अपत्यलोभाद्यातुस्त्रीभर्तारमतिवर्त्तते ।
सेहनिन्दामवाप्नोतिपतिलोकाच्चहीयते ॥१६१॥
नान्योत्पन्नाप्रजास्तीहनचाप्यन्यपरिग्रहे ।
नद्वितीयश्चसाध्वीनांक्वचिद्भर्तोपदिश्यते ॥१६२॥
पतिंहित्वाऽपकृष्टंस्वमुत्कृष्टंयानिषेवते ।
निन्द्यैवसाभवेल्लोकेपरपूर्वेतिचोच्यते ॥१६३॥
व्यभिचारात्तुभर्तुःस्त्रीलोकेप्राप्नोतिनिन्द्यताम् ।
शृगालयोनिम्प्राप्नोतिपापरोगैश्चपीड्यते ॥१६४॥
पतिंयानाभिचरतिमनोवाग्देहसंयता ।
साभर्तृलोकमाप्नोतिसद्भिःसाध्वीतिचोच्यते ॥१६५॥
अनेननारीवृत्तेनमनोवाग्देहसंयता ।
इहाग्र्यांकीर्त्तिमाप्नोतिपतिलोकम्परत्रच ॥१६६॥
एवंवृत्तांसवर्णांस्त्रींद्विजातिःपूर्वमारिणीम् ।
दाहयेदग्निहोत्रेणयज्ञपात्रैश्चधर्मवित् ॥१६७॥
भार्यायैपूर्वमारिण्यैदत्वाऽग्नीनन्त्यकर्मणि ।
पुनर्दारक्रियांकुर्यात्पुनराधानमेवच ॥१६८॥

अनेनविधिनानित्यम्पंचयज्ञान्नहापयेत् ।
द्वितीयमायुषोभागंकृतदारोगृहेवसेत् ॥१६९॥

॥ इतिमानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायाम् ॥
॥ शौचविधिःपंचमोऽध्यायः ॥

---

॥ मानवेधर्म्मशास्त्रेभृगुप्रोक्तायांसंहितायांषष्ठोऽध्यायः ॥

एवंगृहाश्रमेस्थित्वाविधिवत्स्नातकोद्विजः ।
वनेवसेत्तुनियतोयथावद्विजितेन्द्रियः ॥१॥
गृहस्थस्तुयदापश्येद्वलीपलितमात्मनः ।
अपत्यस्यैवचापत्यन्तदाऽरण्यंसमाश्रयेत् ॥२॥
सन्त्यज्यग्राम्यमाहारंसर्वंचैवपरिच्छदम् ।
पुत्रेषुभार्यांनिक्षिप्यवनंगच्छेत्सहैववा ॥३॥
अग्निहोत्रंसमादायगृह्यंचाग्निपरिच्छदम् ।
ग्रामादरण्यन्निःसृत्यनिवसेन्नियतेन्द्रियः ॥४॥
मुन्यन्नैर्विविधैर्मेध्यैःशाकमूलफलेनवा ।
एतानेवमहायज्ञान्निर्वपेद्विधिपूर्वकम् ॥५॥
वसीतचर्मचीरंवासायंस्नायात्प्रगेतथा ।
जटाश्चबिभृयान्नित्यंश्मश्रुलोमनखानिच ॥६॥
यद्भक्ष्यंस्यात्ततोदद्याद्बलिम्भिक्षांचशक्तितः ।
अम्मूलफलभिक्षाभिरर्चयेदाश्रमागतान् ॥७॥

स्वाध्यायेनित्ययुक्तःस्याद्दान्तोमैत्रःसमाहितः ।
दातानित्यमनादातासर्वभूतानुकम्पकः ॥८॥
वैतानिकंचजुहुयादग्निहोत्रंयथाविधि ।
दर्शमस्कंदयन्पर्वपौर्णमासंचयोगतः ॥९॥
ऋक्षेष्ट्याग्रायणंचैवचातुर्मास्यानिचाहरेत् ।
उत्तरायणंचक्रमशोदाक्षस्यायनमेवच ॥१०॥
वासन्तशारदैर्मेध्यैर्मुन्यन्नैःस्वयमाहृतैः ।
पुरोडाशांश्चरूंश्चैवविधिवन्निर्वपेत्पृथक् ॥११॥
देवताभ्यस्तुतद्धुत्वावन्यंमेध्यतरंहविः ।
शेषमात्मनियुंजीतलवणंचस्वयंकृतम् ॥१२॥
स्थलजौदकशाकानिपुष्पमूलफलानिच ।
मेध्यवृक्षोद्भवान्यद्यात्स्नेहांश्चफलसम्भवान् ॥१३॥
वर्जयेन्मधुमांसंचभौमानिकवकानिच ।
भूस्तृणंशियुकंचैवश्लेष्मातकफलानिच ॥१४॥
त्यजेदाश्वयुजेमासिमुन्यन्नम्पूर्वसंचितम् ।
जीर्णानिचैववासांसिशाकमूलफलानिच ॥१५॥
नफालकृष्टमश्नीयादुत्सृष्टमपिकेनचित् ।
नग्रामजातान्यार्तोऽपिमूलानिचंफलानिच ॥१६॥

अग्निपक्वाशनोवास्यात्कालपक्वभुगेववा ।
अश्मकुट्टोभवेद्वाऽपिदन्तोलूखलिकोऽपिवा ॥१७॥
सद्यःप्रक्षालकोवास्यान्मासंसचयिकोऽपिवा ।
षण्मासनिचयोवास्यात्समानिचयएववा ॥१८॥
नक्तंचान्नंसमश्नीयाद्दिवावाहृत्यशक्तितः ।
चतुर्थकालिकोवास्यात्स्याद्वाऽप्यष्टमकालिकः ॥१९॥
चान्द्रायणविधानैर्वाशुक्लेकृष्णेचवर्तयेत् ।
पक्षान्तयोर्वाऽप्यश्नीयाद्यवागूंकुथितांसकृत् ॥२०॥
पुष्पमूलफलैर्वाऽपिकेवलैर्वर्तयेत्सदा ।
कालपक्वैःस्वयंशीर्णैर्वैखानसमतेस्थितः ॥२१॥
भूमौविपरिवर्तेततिष्ठेद्वाप्रपदैर्दिनम् ।
स्थानासनाभ्यांविहरेत्सवनेषूपयन्नपः ॥२२॥
ग्रीष्मेपंचतपास्तुस्याद्वर्षास्वभ्रावकाशिकः ।
आर्द्रवासास्तुहेमन्तेक्रमशोवर्द्धयंस्तपः ॥२३॥
उपस्पृशंस्त्रिषवणम्पितृन्देवांश्चतर्पयेत् ।
तपश्चरंश्चोग्रतरंशोषयेद्देहमात्मनः ॥२४॥
अग्नींश्चात्मनिवैतानान्समारोप्ययथाविधि ।
अनग्निरनिकेतःस्यान्मुनिर्मूलफलाशनः ॥२५॥

अप्रयत्नःसुखार्थेषुब्रह्मचारीधराशयः ।
शरणेष्वममश्चैववृक्षमूलनिकेतनः ॥२६॥
तापसेष्वेवविप्रेषुयात्रिकम्भैक्षमाहरेत् ।
गृहमेधिषुचान्येषुद्विजेषुवनवासिषु ॥२७॥
ग्रामादाहृत्यवाऽश्नीयादष्टौग्रासान्वनेवसन् ।
प्रतिगृह्यपुटेनैवपाणिनाशकलेनवा ॥२८॥
एताश्चान्याश्चसेवेतदीक्षाविप्रोवनेवसन् ।
विविधाश्चौपनिषदीरात्मसंसिद्धयेश्रुतीः ॥२९॥
ऋषिभिर्ब्राह्मणैश्चैवगृहस्थैरेवसेविताः ।
विद्यातपोविवृद्ध्यर्थंशरीरस्यचशुद्धये ॥३०॥
अपराजितांवास्थायव्रजेद्दिशमजिह्मगः ।
आनिपाताच्छरीरस्ययुक्तोवार्यनिलाशनः ॥३१॥
आसांमहर्षिचर्याणान्त्यक्त्वाऽन्यतमयातनुम् ।
वीतशोकभयोविप्रोब्रह्मलोकेमहीयते ॥३२॥
वनेषुतुविहृत्यैवन्तृतीयम्भागमायुषः ।
चतुर्थमायुषोभागन्त्यक्त्वासंगान्परिव्रजेत् ॥३३॥
आश्रमादाश्रमंगत्वाहुतहोमोजितेन्द्रियः ।
भिक्षाबलिपरिश्रान्तःप्रव्रजन्प्रेत्यवर्द्धते ॥३४॥

ऋणानित्रीण्यपाकृत्यमनोमोक्षेनिवेशयेत् ।
अनपाकृत्यमोक्षन्तुसेवमानोव्रजत्यधः ॥३५॥
अधीत्यविधिवद्वेदान्पुत्रांश्चोत्पाद्यधर्मतः ।
इष्ट्वाचशक्तितोयज्ञैर्मनोमोक्षेनिवेशयेत् ॥३६॥
अनधीत्यद्विजोवेदाननुत्पाद्यतथासुतान् ।
अनिष्ट्वाचैवयज्ञैश्चमोक्षमिच्छन्व्रजत्यधः ॥३७॥
प्राजापत्यांनिरूप्येष्टिंसर्ववेदसदक्षिणाम् ।
आत्मन्यग्नीन्समारोप्यब्राह्मणःप्रव्रजेद्गृहात् ॥३८॥
योदत्त्वासर्वभूतेभ्यःप्रव्रजत्यभयंगृहात् ।
तस्यतेजोमयालोकाभवन्तिब्रह्मवादिनः ॥३९॥
यस्मादण्वपिभूतानांद्विजान्नोत्पद्यतेभयम् ।
तस्यदेहाद्विमुक्तस्यभयन्नास्तिकुतश्चन ॥४०॥
आगारादभिनिष्क्रान्तःपवित्रोपचितोमुनिः ।
समुपोढेषुकामेषुनिरपेक्षःपरिव्रजेत् ॥४१॥
एकएवचरेन्नित्यंसिद्ध्यर्थमसहायवान् ।
सिद्धिमेकस्यसम्पश्यन्नजहातिनहीयते ॥४२॥
अनग्निरनिकेतःस्याद्ग्राममन्नार्थमाश्रयेत् ।
उपेक्षकोऽशंकुसुकोमुनिर्भावसमाहितः ॥४३॥

कपालंवृक्षमूलानिकुचेलमसहायता ।
समताचैवसर्वस्मिन्नेतन्मुक्तस्यलक्षणम् ॥४४॥
नाभिनन्देतमरणन्नाभिनन्देतजीवितम् ।
कालमेवप्रतीक्षैतनिर्देशम्भृतकोयथा ॥४५॥
दृष्टिपूतंन्यसेत्पादंवस्त्रपूतंजलम्पिबेत् ।
सत्यपूतांवदेद्वाचंमनःपूतंसमाचरेत् ॥४६॥
अतिवादांस्तितिक्षेतनावमन्येतकंचन ।
नचेमन्देहमाश्रित्यवैरंकुर्वीतकेनचित् ॥४७॥
क्रुध्यन्तंनप्रतिक्रुध्येदाक्रुष्टःकुशलंवदेत् ।
सप्तद्वारावकीर्णांचनवाचमनृतांवदेत् ॥४८॥
अध्यात्मरतिरासीनोनिरपेक्षोनिरामिषः ।
आत्मनैवसहायेनसुखार्थीविचरेदिह ॥४९॥
नचोत्पातनिमित्ताभ्यांननक्षत्रांगविद्यया ।
नानुशासनवादाभ्याम्भिक्षांलिप्सेतकर्हिचित् ॥५०॥
नतापसैर्ब्राह्मणैर्वावयोभिरपिवाश्वभिः ।
आकीर्णम्भिक्षुकैर्वान्यैरागारमुपसंव्रजेत् ॥५१॥
कॢप्तकेशनखश्मश्रुःपात्रीदण्डीकुसुम्भवान् ।
विचरेन्नियतोनित्यंसर्वभूतान्यपीडयन् ॥५२॥

अतैजसानिपात्राणितस्यस्युर्निर्व्रणानिच ।
तेषामद्भिःस्मृतंशौचंचमसानामिवाध्वरे ॥५३॥
अलाबुन्दारुपात्रंचमृन्मयंवैदलन्तथा ।
एतानियतिपात्राणिमनुःस्वायम्भुवोऽब्रवीत् ॥५४॥
एककालंचरेद्भैक्षंनप्रसज्जेतविस्तरे ।
भैक्षेप्रसक्तोहियतिर्विषयेष्वपिसज्जति ॥५५॥
विधूमेसन्नमुसलेव्यंगारेभुक्तवज्जने ।
वृत्तेशरावसम्पातेभिक्षान्नित्यंयतिश्चरेत् ॥५६॥
अलाभेनविषादीस्याल्लाभेचैवनहर्षयेत् ।
प्राणयात्रिकमात्रःस्यान्मात्रासंगाद्विनिर्गतः ॥५७॥
अभिपूजितलाभांस्तुजुगुप्सेतैवसर्वशः ।
अभिपूजितलाभैश्चयतिर्मुक्तोऽपिबध्यते ॥५८॥
अल्पान्नाभ्यवहारेणरहःस्थानासनेनच ।
ह्रियमाणानिविषयैरिन्द्रियाणिनिवर्त्तयेत् ॥५९॥
इन्द्रियाणान्निरोधेनरागद्वेषक्षयेनच ।
अहिंसयाचभूतानाममृतत्वायकल्पते ॥६०॥
अवेक्षेतगतीर्नृणांकर्मदोषसमुद्भवाः ।
निरयेचैवपतनंयातनाश्चयमक्षये ॥६१॥

विप्रयोगम्प्रियैश्चैवसंयोगंचतथाऽप्रियैः ।
जरयाचाभिभवनंव्याधिभिश्चोपपीडनम् ॥६२॥
देहादुत्क्रमणंचास्मात्पुनर्गर्भेचसम्भवम् ।
योनिकोटिसहस्त्रेषुसृतीश्चास्यान्तरात्मनः ॥६३॥
अधर्मप्रभवंचैवदुःखयोगंशरीरिणाम् ।
धर्मार्थप्रभवंचैवसुखसंयोगमक्षयम् ॥६४॥
सूक्ष्मतांचान्ववेक्षेतयोगेनपरमात्मनः ।
देहेषुचसमुत्पत्तिमुत्तमेष्ववधमेषुच ॥६५॥
दूषितोऽपिचरेद्धर्मंयत्रतत्राश्रमेरतः ।
समःसर्वेषुभूतेषुनलिंगन्धर्मकारणम् ॥६६॥
फलंकतकवृक्षस्ययद्यप्यंबुप्रसादकम् ।
ननामग्रहणादेवतस्यवारिप्रसीदति ॥६७॥
संरक्षणार्थंजन्तूनांरात्रावहनिवासदा ।
शरीरस्यात्ययेचैवसमीक्ष्यवसुधांचरेत् ॥६८॥
अह्नाराव्याचयान्जन्तून्हिनस्त्यज्ञानतोयतिः ।
तेषांस्नात्वाविशुद्ध्यर्थंप्राणायामान्षडाचरेत् ॥६९॥
प्राणायामाब्राह्मणस्यत्रयोऽपिविधिवत्कृताः ।
व्याहृतिप्रणवैर्युक्ताविज्ञेयम्परमन्तपः ॥७०॥

दह्यन्तेध्मायमानानांधातूनांहियथामलाः ।
तथेन्द्रियाणांदह्यन्तेदोषाःप्राणस्यनिग्रहात् ॥७१॥
प्राणायामैर्दहेद्दोषान्धारणाभिश्चकिल्विषम् ।
प्रत्याहारेणसंसर्गान्ध्यानेनानीश्वरान्गुणान् ॥७२॥
उच्चावचेषुभूतेषुदुर्ज्ञेयामकृतात्मभिः ।
ध्यानयोगेनसम्पश्येद्गतिमस्यान्तरात्मनः ॥७३॥
सम्यग्दर्शनसम्पन्नःकर्म्मभिर्ननिबध्यते ।
दर्शनेनविहीनस्तुसंसारम्प्रतिपद्यते ॥७४॥
अहिंसयेन्द्रियासंगैर्वैदिकैश्चैवकर्म्मभिः ।
तपसश्चरणैश्चोग्रैःसाधयन्तीहतत्पदम् ॥७५॥
अस्थिस्थूणंस्नायुयुतंमांसशोणितलेपनम् ।
चर्मावनद्धंदुर्गन्धिपूर्णंमूत्रपुरीषयोः ॥७६॥
जराशोकसमाविष्टंरोगायतनमातुरम् ।
रजस्वलमनित्यंचभूतावासमिमन्त्यजेत् ॥७७॥
नदीकूलंयथावृक्षोवृक्षंवाशकुनिर्यथा ।
तथात्यजन्निमन्देहंकृच्छ्राद्ग्राहाद्विमुच्यते ॥७८॥
प्रियेषुस्वेषुसुकृतमप्रियेषुचदुष्कृतम् ।
विसृज्यध्यानयोगेनब्रह्माभ्येतिसनातनम् ॥७९॥

यदाभावेनभवतिसर्वभावेषुनिःस्पृहः ।
तदासुखमवाप्नोतिप्रेत्यचेहचशाश्वतम् ॥८०॥
अनेनविधिनासर्वांस्त्यक्त्वासंगान्शनैःशनैः ।
सर्वद्वन्द्वविनिर्मुक्तोब्रह्मण्येवावतिष्ठते ॥८१॥
ध्यानिकंसर्वमेवैतद्यदेतदभिशब्दितम् ।
नह्यनध्यात्मवित्कश्चित्क्रियाफलमुपाश्नुते ॥८२॥
अधियज्ञम्ब्रह्मजपेदाधिदैविकमेवच ।
अध्यात्मिकंचसततंवेदान्ताभिहितंचयत् ॥८३॥
इदंशरणमज्ञानामिदमेवविजानताम् ।
इदमन्विच्छतांस्वर्गमिदमानन्त्यमिच्छताम् ॥८४॥
अनेनक्रमयोगेनपरिव्रजतियोद्विजः ।
सविधूयेहपाप्मानम्परम्ब्रह्माधिगच्छति ॥८५॥
एषधर्म्मोऽनुशिष्टोवोयतीनांनियतात्मनाम् ।
वेदसंन्यासिकानान्तुकर्म्मयोगन्निबोधत ॥८६॥
ब्रह्मचारीगृहस्थश्चवानप्रस्थोयतिस्तथा ।
एतेगृहस्थप्रभवाश्चत्वारःपृथगाश्रमाः ॥८७॥

सर्वेऽपिक्रमशस्त्वेतेयथाशास्त्रंनिषेविताः ।
यथोक्तकारिणंविप्रंनयन्तिपरमांगतिम् ॥८८॥
सर्वेषामपिचैतेषांवेदस्मृतिविधानतः ।
गृहस्थउच्यतेश्रेष्ठःसत्रीनेतान्बिभर्त्तिहि ॥८९॥
यथानदीनदाःसर्वेसागरेयान्तिसंस्थितिम् ।
तथैवाश्रमिणःसर्वेगृहस्थेयान्तिसंस्थितिम् ॥९०॥
चतुर्भिरपिचैवैतैर्नित्यमाश्रमिभिर्द्विजैः ।
दशलक्षणकोधर्म्मःसेवितव्यःप्रयत्नतः ॥९१॥
धृतिःक्षमादमोऽस्तेयंशौचमिन्द्रियनिग्रहः ।
धीर्विद्यासत्यमक्रोधोदशकन्धर्मलक्षणम् ॥९२॥
दशलक्षणानिधर्म्मस्ययेविप्राःसमधीयते ।
अधीत्यचानुवर्त्तन्तेतेयान्तिपरमांगतिम् ॥९३॥
दशलक्षणकन्धर्म्ममनुतिष्ठन्समाहितः ।
वेदान्तंविधिवच्छ्रुत्वासंन्यसेदनृणोद्विजः ॥९४॥
संन्यस्यसर्वकर्म्माणिकर्म्मदोषानपानुदन् ।
नियतोवेदमभ्यस्यपुत्रैश्वर्येसुखंवसेत् ॥९५॥

एवंसंन्यस्यकर्म्माणिस्वकार्य्यपरमोऽस्पृहः ।
संन्यासेनापहत्यैनःप्राप्नोतिपरमांगतिम् ॥९६॥
एषवोऽभिहितोधर्मोब्राह्मणस्यचतुर्विधः ।
पुण्योऽक्षयफलःप्रेत्यराज्ञान्धर्मंनिबोधत ॥९७॥

॥ इतिमानवेधर्म्मशास्त्रेभृगुप्रोक्तायांसंहितायाम् ॥
॥ षष्ठोऽध्यायः ॥



॥ मानवेधर्म्मशास्त्रेभृगुप्रोक्तायांसंहितायांसप्तमोऽध्यायः ॥

राजधर्म्मान्प्रवक्ष्यामियथावृत्तोभवेन्नृपः ।
सम्भवश्चयथातस्यसिद्धिश्चपरमायथा ॥१॥
ब्राह्मम्प्राप्तेनसंस्कारंक्षत्रियेणयथाविधि ।
सर्वस्यास्ययथान्यायंकर्त्तव्यम्परिरक्षणम् ॥२॥
अराजकेहिलोकेऽस्मिन्सर्वतोविद्रुतेभयात् ।
रक्षार्थमस्यसर्वस्यराजानमसृजत्प्रभुः ॥३॥
इन्द्रानिलयमार्काणामग्नेश्चवरुणस्यच ।
चन्द्रवित्तेशयोश्चैवमात्रानिर्हृत्यशाश्वतीः ॥४॥
यस्मादेषांसुरेन्द्राणाम्मात्राभ्योनिर्मितोनृपः ।
तस्मादभिभवत्येषसर्वभूतानितेजसा ॥५॥
तपत्यादित्यवच्चैषचक्षूंषिचमनांसिच ।
नचैनम्भुविशक्नोतिकश्चिदप्यभिवीक्षितुम् ॥६॥
सोऽग्निर्भवतिवायुश्चसोऽर्कःसोमःसधर्म्मराट् ।
सकुवेरःसवरुणःसमहेन्द्रःप्रभावतः ॥७॥

बालोऽपिनावमन्तव्योमनुष्यइतिभूमिपः ।
महतीदेवताह्येषानररूपेणतिष्ठति ॥८॥
एकमेवदहत्यग्निर्नरंदुरुपसर्पिणम् ।
कुलन्दहतिराजाग्निःसपशुद्रव्यसंचयम् ॥९॥
कार्यंसोऽवेक्ष्यशक्तिंचदेशकालौचतत्त्वतः ।
कुरुतेधर्म्मसिद्ध्यर्थंविश्वरूपम्पुनःपुनः ॥१०॥
यस्यप्रसादेपद्माश्रीर्विजयश्चपराक्रमे ।
मृत्युश्चवसतिक्रोधेसर्वतेजोमयोहिसः ॥११॥
तंयस्तुद्वेष्टिसंमोहात्सविनश्यत्यसंशयम् ।
तस्यह्याशुविनाशायराजाप्रकुरुतेमनः ॥१२॥
तस्माद्धर्मंयमिष्टेषुसंव्यवस्येन्नराधिपः ।
अनिष्टंचाप्यनिष्टेषुतन्धर्मंनविचालयेत् ॥१३॥
तस्यार्थेसर्वभूतानांगोप्तारन्धर्ममात्मजम् ।
ब्रह्मतेजोमयन्दण्डमसृजत्पूर्वमीश्वरः ॥१४॥
तस्यसर्वाणिभूतानिस्थावराणिचराणिच ।
भयाद्भोगायकल्पन्तेस्वधर्मान्नचलन्तिच ॥१५॥
तन्देशकालौशक्तिंचविद्यांचावेक्ष्यतत्त्वतः ।
यथार्हतःसम्प्रणयेन्नरेष्वन्यायवर्त्तिषु ॥१६॥

सराजापुरुषोदण्डःसनेताशासिताचसः । 
चतुर्णामाश्रमाणांचधर्मस्यप्रतिभूःस्मृतः ॥१७॥
दण्डःशास्तिप्रजाःसर्वादण्डएवाभिरक्षति । 
दण्डःसुप्तेषुजागर्तिदण्डन्धर्मंविदुर्बुधाः ॥१८॥
समीक्ष्यसधृतःसम्यक्सर्वारंजयतिप्रजाः । 
असमीक्ष्यप्रणीतस्तुविनाशयतिसर्वतः ॥१९॥
यदिनप्रणयेद्राजादण्डन्दण्ड्येष्वतन्द्रितः । 
शूलेमत्स्यानिवापक्ष्यन्दुर्बलान्बलवत्तराः ॥२०॥
अद्यात्काकःपुरोडाशंश्वावलिह्याद्धविस्तथा । 
स्वाम्यंचनस्यात्कस्मिंश्चित्प्रवर्त्तेताधरोत्तरम् ॥२१॥
सर्वोदण्डजितोलोकोदुर्लभोहिशुचिर्नरः । 
दण्डस्यहिभयात्सर्वंजगद्भोगायकल्पते ॥२२॥
देवदानवगन्धर्वारक्षांसिपतगोरगाः । 
तेऽपिभोगायकल्पन्तेदण्डेनैवनिपीडिताः ॥२३॥
दुष्येयुःसर्ववर्णाश्चभिद्येरन्सर्वसेतवः । 
सर्वलोकप्रकोपश्चभवेद्दण्डस्यविभ्रमात् ॥२४॥
यत्रश्यामोलोहिताक्षोदण्डश्चरतिपापहा । 
प्रजास्तत्रनमुह्यन्तिनेताचेत्साधुपश्यति ॥२५॥

तस्याहुःसम्प्रणेतारंराजानंसत्यवादिनम् ।
समीक्ष्यकारिणम्प्राज्ञन्धर्मकामार्थकोविदम् ॥२६॥
तंराजाप्रणयन्सम्यक्त्रिवर्गेणाभिवर्द्धते ।
कामात्माविषमःक्षुद्रोदण्डेनैवनिहन्यते ॥२७॥
दण्डोहिसुमहत्तेजोदुर्द्धरश्चाकृतात्मभिः ।
धर्माद्विचलितंहन्तिनृपमेवसबान्धवम् ॥२८॥
ततोदुर्गंचराष्ट्रंचलोकंचसचराचरम् ।
अन्तरिक्षगतांश्चैवमुनीन्देवांश्चपीडयेत् ॥२९॥
सोऽसहायेनमूढेनलुब्धेनाकृतबुद्धिना ।
नशक्योन्यायतोनेतुंसक्तेनविषयेषुच ॥३०॥
शुचिनासत्यसन्धेनयथाशास्त्रानुसारिणा ।
प्रणेतुंशक्यतेदण्डःसुसहायेनधीमता ॥३१॥
स्वराष्ट्रेन्यायवृत्तःस्याद्भृशदण्डश्चशत्रुषु ।
सुहृत्स्वजिह्मःस्निग्धेषुब्राह्मणेषुक्षमान्वितः ॥३२॥
एवंवृत्तस्यनृपतेःशिलोञ्छेनापिजीवतः ।
विस्तीर्यतेयशोलोकेतैलविन्दुरिवाम्भसि ॥३३॥
अतस्तुविपरीतस्यनृपतेरजितात्मनः ।
संक्षिप्यतेयशोलोकेघृतविन्दुरिवाम्भसि ॥३४॥

स्वेस्वेधर्मेनिविष्टानांसर्वेषामनुपूर्वशः ।
वर्णानामाश्रमाणांचराजासृष्टोऽभिरक्षिता ॥३५॥
तेनयद्यत्सभृत्येनकर्त्तव्यंरक्षताप्रजाः ।
तत्तद्वोऽहम्प्रवक्ष्यामियथावदनुपूर्वशः ॥३६॥
ब्राह्मणान्पर्युपासीतप्रातरुत्थायपार्थिवः ।
त्रैविद्यवृद्धान्विदुषस्तिष्ठेत्तेषांचशासने ॥३७॥
वृद्धांश्चनित्यंसेवेतविप्रान्वेदविदःशुचीन् ।
वृद्धसेवीहिसततंरक्षोभिरपिपूज्यते ॥३८॥
तेभ्योऽधिगच्छेद्विनयंविनीतात्माऽपिनित्यशः ।
विनीतात्माहिनृपतिर्नविनश्यतिकर्हिचित् ॥३९॥
बहवोऽविनयान्नष्टाराजानःसपरिच्छदाः ।
वनस्थाअपिराज्यानिविनयात्प्रतिपेदिरे ॥४०॥
वेणोविनष्टोऽविनयान्नहुषश्चैवपार्थिवः ।
सुदासोयवनश्चैवसुमुखोनिमिरेवच ॥४१॥
पृथुस्तुविनयाद्राज्यम्प्राप्तवान्मनुरेवच ।
कुवेरश्चधनैश्वर्य्यम्ब्राह्मण्यंचैवगाधिजः ॥४२॥
त्रैविद्येभ्यस्त्रयींविद्यान्दंडनीतिंचशाश्वतीम् ।
आन्वीक्षिकींचात्मविद्यांवार्त्तारम्भांश्चलोकतः ॥४३॥

इन्द्रियाणांजयेयोगंसमातिष्ठेद्दिवानिशम् ।
जितेन्द्रियोहिशक्नोतिवशेस्थापयितुम्प्रजाः ॥४४॥
दशकामसमुत्थानितथाऽष्टौक्रोधजानिच ।
व्यसनानिदुरन्तानिप्रयत्नेनविवर्ज्जयेत् ॥४५॥
कामजेषुप्रसक्तोहिव्यसनेषुमहीपतिः ।
वियुज्यतेऽर्थधर्माभ्यांक्रोधजेष्वात्मनैवतु ॥४६॥
मृगयाऽक्षादिवास्वप्नःपरिवादःस्त्रियोमदः ।
तौर्य्यत्रिकंवृथाऽट्याचकामजोदशकोगणः ॥४७॥
पैशुन्यंसाहसन्द्रोहईर्षाऽसूयाऽर्थदूषणम् ।
वाग्दण्डजंचपारुष्यंक्रोधजोऽपिगणोऽष्टकः ॥४८॥
द्वयोरप्येतयोर्मूलंयंसर्वेकवयोविदुः ।
तंयत्नेनजयेल्लोभन्तज्जावेतावुभौगणौ ॥४९॥
पानमक्षाःस्त्रियश्चैवमृगयाचयथाक्रमम् ।
एतत्कष्टतमंविद्याच्चतुष्कंकामजेगणे ॥५०॥
दण्डस्यपातनंचैववाक्पारुष्यार्थदूषणे ।
क्रोधजेऽपिगणेविद्यात्कष्टमेतत्त्रिकंसदा ॥५१॥
सप्तकस्यास्यवर्गस्यसर्वत्रैवानुषंगिणः ।
पूर्वंपूर्वंगुरुतरंविद्याद्व्यसनमात्मवान् ॥५२॥

व्यसनस्यचमृत्योश्चव्यसनंकष्टमुच्यते ।
व्यसन्यधोऽधोव्रजतिस्वर्यात्यव्यसनीमृतः ॥५३॥
मौलाञ्शास्त्रविदःशूरांल्लब्धलक्षान्कुलोद्गतान् ।
सचिवान्सप्तचाष्टौवाप्रकुर्वीतपरीक्षितान् ॥५४॥
अपियत्सुकरंकर्मतदप्येकेनदुष्करम् ।
विशेषतोऽसहायेनकिमुराज्यंमहोदयम् ॥५५॥
तैःसार्द्धंचिन्तयेन्नित्यंसामान्यंसन्धिविग्रहम् ।
स्थानंसमुदयंगुप्तिंलब्धप्रशमनानिच ॥५६॥
तेषांस्वंस्वमभिप्रायमुपलभ्यपृथक्पृथक् ।
समस्तानांचकार्येषुविदध्याद्धितमात्मनः ॥५७॥
सर्वेषान्तुविशिष्टेनब्राह्मणेनविपश्चिता ।
मंत्रयेत्परमंमंत्रंराजाषाड्गुण्यसंयुतम् ॥५८॥
नित्यंतस्मिन्समाश्वस्तःसर्वकार्याणिनिक्षिपेत् ।
तेनसार्द्धंविनिश्चित्यततःकर्म्मसमारभेत् ॥५९॥
अन्यानपिप्रकुर्वीतशुचीन्प्राज्ञानवस्थितान् ।
सम्यगर्थसमाहर्तॄनमात्यान्सुपरीक्षितान् ॥६०॥
निर्वर्त्तेतास्ययावद्भिरितिकर्त्तव्यतानृभिः ।
तावतोऽतन्द्रितान्दक्षान्प्रकुर्वीतविचक्षणान् ॥६१॥

तेषामर्थेनियुंजीतशूरान्दक्षान्कुलोद्गतान् ।
शुचीनाकरकर्मान्तेभीरूनन्तर्निवेशने ॥६२॥
दूतंचैवप्रकुर्वीतसर्वशास्त्रविशारदम् ।
इंगिताकारचेष्टज्ञंशुचिन्दक्षंकुलोद्गतम् ॥६३॥
अनुरक्तःशुचिर्दक्षःस्मृतिमान्देशकालवित् ।
वपुष्मान्वीतभीर्वाग्मीदूतोराज्ञःप्रशस्यते ॥६४॥
अमात्येदण्डआयत्तोदण्डेवैनयिकीक्रिया ।
नृपतौकोषराष्ट्रेचदूतेसन्धिविपर्य्ययौ ॥६५॥
दूतएवहिसन्धत्तेभिनत्त्येवचसंहतान् ।
दूतस्तत्कुरुतेकर्मभिद्यन्तेयेनवानवा ॥६६॥
सविद्यादस्यकृत्येषुनिगूढेंगितचेष्टितैः ।
आकारमिंगितंचेष्टांभृत्येषुचचिकीर्षितम् ॥६७॥
बुद्ध्वाचसर्वन्तत्त्वेनपरराजचिकीर्षितम् ।
तथाप्रयत्नमातिष्ठेद्यथात्मानंनपीडयेत् ॥६८॥
जांगलंसस्यसम्पन्नमार्यप्रायमनाविलम् ।
रम्यमानतसामन्तंस्वाजीव्यन्देशमावसेत् ॥६९॥
धनुर्दुर्गंमहीदुर्गमब्दुर्गंवार्क्षमेववा ।
नृदुर्गंगिरिदुर्गंवासमाश्रित्यवसेत्पुरम् ॥७०॥

सर्वेणतुप्रयत्नेनगिरिदुर्गंसमाश्रयेत् ।
एषांहिबाहुगुण्येनगिरिदुर्गंविशिष्यते ॥७१॥
त्रीण्याद्यान्याश्रितास्त्वेषांमृगगर्त्ताश्रयाप्सराः ।
त्रीण्युत्तराणिक्रमशःप्लवंगमनरामराः ॥७२॥
यथादुर्गाश्रितानेतान्नोपहिंसन्तिशत्रवः ।
तथाऽरयोनहिंसन्तिनृपंदुर्गसमाश्रितम् ॥७३॥
एकःशतंयोधयतिप्राकारस्थोधनुर्द्धरः ।
शतन्दशसहस्राणितस्माद्दुर्गंविधीयते ॥७४॥
तत्स्यादायुधसम्पन्नन्धनधान्येनवाहनैः ।
ब्राह्मणैःशिल्पिभिर्यन्त्रैर्यवसेनोदकेनच ॥७५॥
तस्यमध्येसुपर्याप्तंकारयेद्गृहमात्मनः ।
गुप्तंसर्वर्तुकंशुभ्रंजलवृक्षसमन्वितम् ॥७६॥
तदध्यास्योद्वहेद्भार्यांसवर्णांलक्षणान्विताम् ।
कुलेमहतिसम्भूतांहृद्यांरूपगुणान्विताम् ॥७७॥
पुरोहितंचकुर्वीतवृणुयादेवचर्त्विजम् ।
तेऽस्यगृह्याणिकर्माणिकुर्युर्वैतानिकानिच ॥७८॥
यजेतराजाक्रतुभिर्विविधैराप्तदक्षिणैः ।
धर्मार्थंचैवविप्रेभ्योदद्याद्भोगान्धनानिच ॥७९॥

संांवत्सरिकमाप्तैश्चराष्ट्रादाहारयेद्बलिम् ।
स्याच्चाम्नायापरोलोकेवर्तेतपितृवन्नृषु ॥८०॥
अध्यक्षान्विविधान्कुर्यात्तत्रतत्रविपश्चितः ।
तेऽस्यसर्वाण्यवेक्षेरन्नृणांकार्याणिकुर्वताम् ॥८१॥
आवृत्तानांगुरुकुलाद्विप्राणांपूजकोभवेत् ।
नृपाणामक्षयोह्येषनिधिर्ब्राह्मोऽभिधीयते ॥८२॥
नतंस्तेनानचामित्राहरन्तिनचनश्यति ।
तस्माद्राज्ञानिधातव्योब्राह्मणेष्वक्षयोनिधिः ॥८३॥
नस्कन्दतेनव्यथतेनविनश्यतिकर्हिचित् ।
वरिष्ठमग्निहोत्रेभ्योब्राह्मणस्यमुखेहुतम् ॥८४॥
सममब्राह्मणेदानंद्विगुणंब्राह्मणब्रुवे ।
प्राधीतेशतसाहस्रमनन्तंवेदपारगे ॥८५॥
पात्रस्यहिविशेषेणश्रद्दधानतयैवच ।
अल्पंवाबहुवाप्रेत्यदानस्यावाप्यतेफलम् ॥८६॥
समोत्तमाधमैराजात्वाहूतःपालयन्प्रजाः ।
ननिवर्तेतसंग्रामात्क्षात्रन्धर्म्ममनुस्मरन् ॥८७॥
संग्रामेष्वनिवर्त्तित्वम्प्रजानांचैवपालनम् ।
शुश्रूषाब्राह्मणानांचराज्ञांश्रेयस्करम्परम् ॥८८॥

आहवेषुमिथोऽन्योऽन्यंजिघांसन्तोमहीक्षितः ।
युध्यमानाःपरंशक्त्यास्वर्गंयान्त्यपराङ्मुखाः ॥८९॥
नकूटैरायुधैर्हन्याद्युध्यमानोरणेरिपून् ।
नकर्णिभिर्नापिदिग्धैर्नाग्निज्वलिततेजनैः ॥९०॥
नचहन्यात्स्थलारूढन्नक्लीबंनकृतांजलिम् ।
नमुक्तकेशन्नासीनन्नतवास्मीतिवादिनम् ॥९१॥
नसुप्तन्नविसन्नाहन्ननग्नन्ननिरायुधम् ।
नायुध्यमानम्पश्यन्तन्नपरेणसमागतम् ॥९२॥
नायुधव्यसनप्राप्तन्नार्त्तन्नातिपरिक्षतम् ।
नभीतन्नपरावृत्तंसतान्धर्म्ममनुस्मरन् ॥९३॥
यस्तुभीतःपरावृत्तःसंग्रामेहन्यतेपरैः ।
भर्त्तुर्यद्दुष्कृतंकिंचित्तत्सर्वम्प्रतिपद्यते ॥९४॥
यच्चास्यसुकृतंकिंचिदमुत्रार्थमुपार्जितम् ।
भर्त्तातत्सर्वमादत्तेपरावृत्तहतस्यतु ॥९५॥
रथाश्वंहस्तिनञ्छत्रन्धनन्धान्यम्पशून्स्त्रियः ।
सर्वद्रव्याणिकुप्यंचयोयज्जयतितस्यतत् ॥९६॥
राज्ञश्चदद्युरुद्धारमित्येषावैदिकीश्रुतिः ।
राज्ञाचसर्वयोधेभ्योदातव्यमपृथग्जितम् ॥९७॥

एषोऽनुपस्कृतःप्रोक्तोयोधधर्म्मःसनातनः ।
अस्माद्धर्म्मान्नच्यवेतक्षत्रियोघ्नन्रणेरिपून् ॥९८॥
अलब्धंचैवलिप्सेतलब्धंरक्षेत्प्रयत्नतः ।
रक्षितंवर्द्धयेच्चैववृद्धम्पात्रेषुनिक्षिपेत् ॥९९॥
एतच्चतुर्विधंविद्यात्पुरुषार्थप्रयोजनम् ।
अस्यनित्यमनुष्ठानंसम्यक्कुर्य्यादतन्द्रितः ॥१००॥
अलब्धमिच्छेद्दण्डेनलब्धंरक्षेदवेक्षया ।
रक्षितंवर्द्धयेद्वृद्ध्यावृद्धन्दानेननिक्षिपेत् ॥१०१॥
नित्यमुद्यतदण्डःस्यान्नित्यंविवृतपौरुषः ।
नित्यंसंवृतसंवार्य्योनित्यञ्छिद्रानुसार्य्यरेः ॥१०२॥
नित्यमुद्यतदण्डस्यकृत्स्नमुद्विजतेजगत् ।
तस्मात्सर्वाणिभूतानिदण्डेनैवप्रसाधयेत् ॥१०३॥
अमाययैववर्त्तेतनकथंचनमायया ।
बुध्येतारिप्रयुक्ताञ्चमायान्नित्यंस्वसंवृतः ॥१०४॥
नास्यछिद्रम्परोविद्याद्विद्याच्छिद्रम्परस्यतु ।
गूहेत्कूर्म्मइवांगानिरक्षेद्विवरमात्मनः ॥१०५॥
वकवच्चिन्तयेदर्थान्सिंहवच्चपराक्रमेत् ।
वृकवच्चावलुम्पेतशशवच्चविनिष्पतेत् ॥१०६॥

एवंविजयमानस्यये<ऽ>स्यस्युःपरिपन्थिनः ।
ताञानयेद्वशंसर्वान्सामादिभिरुपक्रमैः ॥१०७॥
यदितेतुनतिष्ठेयुरुपायैःप्रथमैस्त्रिभिः ।
दण्डेनैवप्रसह्यैतांश्छनकैर्वशमानयेत् ॥१०८॥
सामादीनामुपायानांचतुर्णामपिपण्डिताः ।
सामदण्डौप्रशंसन्तिनित्यंराष्ट्राभिवृद्धये ॥१०९॥
यथोद्धरतिनिर्द्दातांकक्षन्धान्यंचरक्षति ।
तथारक्षेन्नृपोराष्ट्रंहन्याच्चपरिपन्थिनः ॥११०॥
मोहाद्राजास्वराष्ट्रंयःकर्षयत्यनवेक्षया ।
सो<ऽ>चिराद्भ्रश्यतेराज्याज्जीविताच्चसबान्धवः ॥१११॥
शरीरकर्षणात्प्राणाःक्षीयन्तेप्राणिनांयथा ।
तथाराज्ञामपिप्राणाःक्षीयन्तेराष्ट्रकर्षणात् ॥११२॥
राष्ट्रस्यसंग्रहेनित्यंविधानमिदमाचरेत् ।
सुसंगृहीतराष्ट्रोहिपार्थिवःसुखमेधते ॥११३॥
द्वयोस्त्रयाणाम्पंचानांमध्येगुल्ममधिष्ठितम् ।
तथाग्रामशतानांचकुर्य्याद्राष्ट्रस्यसंग्रहम् ॥११४॥
ग्रामस्याधिपतिंकुर्य्याद्दशग्रामपतिन्तथा ।
विंशतीशंशतेशंचसहस्रपतिमेवच ॥११५॥

ग्रामेदोषान्समुत्पन्नान्ग्रामिकःशनकैःस्वयम् ।
शंसेद्ग्रामदशेशायदशेशोविंशतीशिनम् ॥११६॥
विंशतीशस्तुतत्सर्वंशतेशायनिवेदयेत् ।
शंसेद्ग्रामशतेशस्तुसहस्त्रपतयेस्वयम् ॥११७॥
यानिराजप्रदेयानिप्रत्यहंग्रामवासिभिः ।
अन्नपानेन्धनादीनिग्रामिकस्तान्यवाप्नुयात् ॥११८॥
दशीकुलन्तुभुंजीतविंशीपंचकुलानिच ।
ग्रामंग्रामशताध्यक्षःसहस्त्राधिपतिःपुरम् ॥११९॥
तेषांग्राम्याणिकार्य्याणिपृथक्कार्य्याणिचैवहि ।
राज्ञोऽन्यःसचिवःस्निग्धस्तानिपश्येदतन्द्रितः ॥१२०॥
नगरेनगरेचैकंकुर्य्यात्सर्वार्थचिन्तकम् ।
उच्चैःस्थानंघोररूपंनक्षत्राणामिवग्रहम् ॥१२१॥
सतानानुपरिक्रामेत्सर्वानेवसदास्वयम् ।
तेषांवृत्तम्परिणयेत्सम्यग्राष्ट्रेषुतच्चरैः ॥१२२॥
राज्ञोहिरक्षाधिकृताःपरस्वादायिनःशठाः ।
भृत्याभवन्तिप्रायेणतेभ्योरक्षेदिमाःप्रजाः ॥१२३॥
येकार्यिकेभ्योऽर्थमेवगृह्णीयुःपापचेतसः ।
तेषांसर्वस्वमादायराजाकुर्य्यात्प्रवासनम् ॥१२४॥

राजकर्म्मसुयुक्तानांस्त्रीणाम्प्रेष्यजनस्यच ।
प्रत्यहंकल्पयेद्वृत्तिंस्थानकर्म्मानुरूपतः ॥१२५॥
पणोदेयोऽवकृष्टस्यषडुत्कृष्टस्यवेतनम् ।
षाण्मासिकस्तथाछादोधान्यद्रोणस्तुमासिकः ॥१२६॥
क्रयविक्रयमध्वानम्भक्तंचसपरिव्ययम् ।
योगक्षेमंचसम्प्रेक्ष्यवणिजोदापयेत्करान् ॥१२७॥
यथाफलेनयुज्येतराजाकर्त्ताचकर्म्मणाम् ।
तथाऽवेक्ष्यनृपोराष्ट्रेकल्पयेत्सततंकरान् ॥१२८॥
यथाऽल्पाल्पमदन्त्याद्यंवार्य्योकोवत्सषट्पदाः ।
तथाऽल्पाल्पोग्रहीतव्योराष्ट्राद्राज्ञाऽब्दिकःकरः ॥१२९॥
पंचाशद्भागआदेयोराज्ञापशुहिरण्ययोः ।
धान्यानामष्टमोभागःषष्ठोद्वादशएववा ॥१३०॥
आददीताथषड्भागन्द्रुमांसमधुसर्पिषाम् ।
गन्धौषधिरसानांचपुष्पमूलफलस्यच ॥१३१॥
पत्रशाकतृणानांचचर्मणांवैदलस्यच ।
मृन्मयानांचभाण्डानांसर्वस्याश्ममयस्यच ॥१३२॥
म्रियमाणोऽप्याददीतनराजाश्रोत्रियात्करम् ।
नचक्षुधाऽस्यसंसीदेच्छ्रोत्रियोविषयेवसन् ॥१३३॥

यस्यराज्ञस्तुविषयेश्रोत्रियःसीदतिक्षुधा ।
तस्यापितत्क्षुधाराष्ट्रमचिरेणैवसीदति ॥१३४॥
श्रुतवृत्तेविदित्वाऽस्यवृत्तिन्धर्म्यांम्प्रकल्पयेत् ।
संरक्षेत्सर्वतश्चैनम्पितापुत्रमिवौरसम् ॥१३५॥
संरक्ष्यमाणोराज्ञायंकुरुतेधर्ममन्वहम् ।
तेनायुर्वर्द्धतेराज्ञोद्रविणंराष्ट्रमेवच ॥१३६॥
यत्किंचिदपिवर्षस्यदापयेत्करसंज्ञितम् ।
व्यवहारेणजीवन्तंराजाराष्ट्रेपृथग्जनम् ॥१३७॥
कारुकाञ्छिल्पिनश्चैवशूद्रांश्चात्मोपजीविनः ।
एकैकंकारयेत्कर्म्ममासिमासिमहीपतिः ॥१३८॥
नोच्छिन्द्यादात्मनोमूलम्परेषांचातितृष्णया ।
उच्छिन्दन्ह्यात्मनोमूलमात्मानन्तांश्चपीडयेत् ॥१३९॥
तीक्ष्णश्चैवमृदुश्चस्यात्कार्य्यंवीक्ष्यमहीपतिः ।
तीक्ष्णश्चैवमृदुश्चैवराजाभवतिसम्मतः ॥१४०॥
अमात्यमुख्यन्धर्म्मज्ञम्प्राज्ञन्दान्तंकुलोद्गतम् ।
स्थापयेदासनेतस्मिन्खिन्नःकार्य्येक्षणेनृणाम् ॥१४१॥
एवंसर्वंविधायेदमितिकर्तव्यमात्मनः ।
युक्तश्चैवाप्रमत्तश्चपरिरक्षेदिमाःप्रजाः ॥१४२॥

विक्रोशन्त्योयस्यराष्ट्राद्ध्रियन्तेदस्युभिःप्रजाः ।
संपश्यतःसभृत्यस्यमृतःसनतुजीवति ॥१४३॥
क्षत्रियस्यपरोधर्म्मःप्रजानामेवपालनम् ।
निर्द्दिष्टफलभोक्ताहिराजाधर्म्मेणयुज्यते ॥१४४॥
उत्थायपश्चिमेयामेकृतशौचःसमाहितः ।
हुताग्निर्ब्राह्मणांश्चार्च्यप्रविशेत्सशुभांसभाम् ॥१४५॥
तत्रस्थितःप्रजाःसर्वाःप्रतिनन्द्यविसर्जयेत् ।
विसृज्यचप्रजाःसर्वामंत्रयेत्सहमंत्रिभिः ॥१४६॥
गिरिपृष्ठंसमारुह्यप्रासादंवारहोगतः ।
अरण्येनिःशलाकेवामंत्रयेदविभावितः ॥१४७॥
यस्यमंत्रंनजानन्तिसमागम्यपृथग्जनाः ।
सकृत्स्नांपृथिवीम्भुंक्तेकोषहीनोऽपिपार्थिवः ॥१४८॥
जडमूकान्धबधिरांस्तिर्य्यग्योनान्वयोऽतिगान् ।
स्त्रीम्लेच्छव्याधितव्यंगान्मंत्रकालेऽपसारयेत् ॥१४९॥
भिन्दन्त्यवमतामंत्रन्तैर्य्यग्योनास्तथैवच ।
स्त्रियश्चैवविशेषेणतस्मात्तत्रादृतोभवेत् ॥१५०॥
मध्यन्दिनेऽर्द्धरात्रेवाविश्रान्तोविगतक्लमः ।
चिन्तयेद्धर्मकामार्थान्सार्द्धन्तैरेकएववा ॥१५१॥

परस्परविरुद्धानान्तेषांचसमुपार्ज्जनम् ।
कन्यानांसम्प्रदानंचकुमाराणांचरक्षणम् ॥१५२॥
दूतसम्प्रेषणंचैवकार्यशेषन्तथैवच ।
अन्तःपुरप्रचारंचप्रणिधीनांचचेष्टितम् ॥१५३॥
कृत्स्नंचाष्टविधंकर्मपंचवर्गंचतत्वतः ।
अनुरागापरागौचप्रचारम्मण्डलस्यच ॥१५४॥
मध्यमस्यप्रचारंचविजिगीषोश्चचेष्टितम् ।
उदासीनप्रचारंचशत्रोश्चैवप्रयत्नतः ॥१५५॥
एताःप्रकृतयोमूलम्मण्डलस्यसमासतः ।
अष्टौचान्याःसमाख्याताद्वादशैवतुताःस्मृताः ॥१५६॥
अमात्यराष्ट्रदुर्गार्थदण्डाख्याःपचचापराः ।
प्रत्येकंकथिताश्चेताःसंक्षेपेणद्विसप्ततिः ॥१५७॥
अनन्तरमरिंविद्यादरिसेविनमेवच ।
अरेरनन्तरम्मित्रमुदासीनन्तयोःपरम् ॥१५८॥
तान्सर्वानभिसन्दध्यात्सामादिभिरुपक्रमैः ।
व्यस्तैश्चैवसमस्तैश्चपौरुषेणनयेनच ॥१५९॥
सन्धिंचविग्रहंचैवयानमासनमेवच ।
द्वैधीभावंसंश्रयंचषड्गुणांश्चिन्तयेत्सदा ॥१६०॥

आसनंचैवयानंचसन्धिंविग्रहमेवच ।
कार्य्यंवीक्ष्यप्रयुंजीतद्वैधंसंश्रयमेवच ॥१६१॥
सन्धिन्तुद्विविधंविद्याद्राजाविग्रहमेवच ।
उभेयानासनेचैवद्विविधःसंश्रयःस्मृतः ॥१६२॥
समानयानकर्माचविपरीतस्तथैवच ।
तदात्वायतिसंयुक्तःसन्धिर्ज्ञेयोद्विलक्षणः ॥१६३॥
स्वयंकृतश्चकार्यार्थमकालेकालएववा ।
मित्रस्यचैवापकृतेद्विविधोविग्रहःस्मृतः ॥१६४॥
एकाकिनश्चात्ययिकेकार्येप्राप्तेयदृच्छया ।
संहतस्यचमित्रेणद्विविधंयानमुच्यते ॥१६५॥
क्षीणस्यचैवक्रमशोदैवात्पूर्वकृतेनवा ।
मित्रस्यचानुरोधेनद्विविधंस्मृतमासनम् ॥१६६॥
बलस्यस्वामिनश्चैवस्थितिःकार्य्यार्थसिद्धये ।
द्विविधंकीर्त्यतेद्वैधंषाड्गुण्यगुणवेदिभिः ॥१६७॥
अर्थसम्पादनार्थंचपीड्यमानस्यशत्रुभिः ।
साधुषुव्यपदेशार्थंद्विविधःसंश्रयःस्मृतः ॥१६८॥
यदाऽवगच्छेदायत्यामाधिक्यन्ध्रुवमात्मनः ।
तदात्वेचाल्पिकाम्पीडान्तदासन्धिंसमाश्रयेत् ॥१६९॥

यदाप्रकृष्टामन्येतसर्वास्तुप्रकृतीर्भृशम् ।
अत्युच्छ्रितन्तथात्मानन्तदाकुर्वीतविग्रहम् ॥१७०॥
यदामन्येतभावेनहृष्टम्पुष्टंबलंस्वकम् ।
परस्यविपरीतंचतदायायाद्रिपुम्प्रति ॥१७१॥
यदातुस्यात्परिक्षीणोवाहनेनबलेनच ।
तदासीतप्रयत्नेनशनकैःसान्त्वयन्नरीन् ॥१७२॥
मन्येतारिंयदाराजासर्वथाबलवत्तरम् ।
तदाद्विधाबलंकृत्वासाधयेत्कार्य्यमात्मनः ॥१७३॥
यदापरबलानान्तुगमनीयतमोभवेत् ।
तदातुसंश्रयेत्क्षिप्रन्धार्म्मिकंबलिनंनृपम् ॥१७४॥
निग्रहम्प्रकृतीनांचकुर्य्याद्योऽरिबलस्यच ।
उपसेवेततन्नित्यंसर्वयत्नैर्गुरुंयथा ॥१७५॥
यदितत्रापिसम्पश्येद्दोषंसंश्रयकारितम् ।
सुयुद्धमेवतत्रापिनिर्विशंकःसमाचरेत् ॥१७६॥
सर्वोपायैस्तथाकुर्य्यान्नीतिज्ञःपृथिवीपतिः ।
यथास्याभ्यधिकानस्युर्मित्रोदासीनशत्रवः ॥१७७॥
आयतिंसर्वकार्य्याणान्तदात्वंचविचारयेत् ।
अतीतानांचसर्वेषांगुणदोषौचतत्त्वतः ॥१७८॥

आयत्यांगुणदोषज्ञस्तदात्वेक्षिप्रनिश्चयः ।
अतीतेकार्य्यशेषज्ञःशत्रुभिर्नाभिभूयते ॥१७९॥
यथैनन्नाभिसन्दध्युर्मित्रोदासीनशत्रवः ।
तथासर्वंसंविदध्यादेषसामासिकोनयः ॥१८०॥
यदातुयानमातिष्ठेदरिराष्ट्रम्प्रतिप्रभुः ।
तदाऽनेनविधानेनयायादरिपुरंशनैः ॥१८१॥
मार्गशीर्षेशुभेमासियायाद्यात्रांमहीपतिः ।
फाल्गुनंवाऽथचैत्रंवामासौप्रतियथाबलम् ॥१८२॥
अन्येष्वपितुकालेषुयदापश्येद्ध्रुवंजयम् ।
तदायायाद्विगृह्यैवव्यसनेचोत्थितेरिपोः ॥१८३॥
कृत्वाविधानम्मूलेतुयात्रिकंचयथाविधि ।
उपगृह्यास्पदंचैवचारान्सम्यग्विधायच ॥१८४॥
संशोध्यत्रिविधंमार्गंषड्विधंचबलंस्वकम् ।
साम्परायिककल्पेनयायादरिपुरंशनैः ॥१८५॥
शत्रुसेविनिमित्रेचगूढेयुक्ततरोभवेत् ।
गतप्रत्यागतेचैवसहिकष्टतरोरिपुः ॥१८६॥
दण्डव्यूहेनतन्मार्गंयायात्तुशकटेनवा ।
वराहमकराभ्यांवासूच्यावागरुडेनवा ॥१८७॥

यतश्चभयमाशंकेत्ततोविस्तारयेद्बलम् ।
पद्मेनचैवव्यूहेननिविशेतसदास्वयम् ॥१८८॥
सेनापतिबलाध्यक्षौसर्वदिक्षुनिवेशयेत् ।
यतश्चभयमाशंकेत्प्राचीन्तांकल्पयेद्दिशम् ॥१८९॥
गुल्मांश्चस्थापयेदाप्तान्कृतसंज्ञान्समन्ततः ।
स्थानेयुद्धेचकुशलानभीरूनविकारिणः ॥१९०॥
संहतान्योधयेदल्पान्कामंविस्तारयेद्बहून् ।
सूच्यावज्रेणचैवैतान्व्यूहेनव्यूह्ययोधयेत् ॥१९१॥
स्यन्दनाश्वैस्समेयुध्येदनूपेनौद्विपैस्तथा ।
वृक्षगुल्मावृतेचापैरसिचर्म्मायुधैःस्थले ॥१९२॥
कुरुक्षेत्रांश्चमत्स्यांश्चपंचालाञ्छूरसेनजान् ।
दीर्घांल्लघूंश्चैवनरानग्रानीकेषुयोधयेत् ॥१९३॥
प्रहर्षयेद्बलंव्यूह्यतांश्चसम्यक्परीक्षयेत् ।
चेष्टाश्चैवविजानीयादरीन्योधयतामपि ॥१९४॥
उपरुध्यारिमासीतराष्ट्रंचास्योपपीडयेत् ।
दूषयेच्चास्यसततंयवसान्नोदकेन्धनम् ॥१९५॥
भिन्द्याच्चैवतडागानिप्राकारपरिखास्तथा ।
समवस्कन्दयेच्चैनंरात्रौवित्रासयेत्तथा ॥१९६॥

उपजप्यानुपजपेद्बुध्येतैवचतत्कृतम् ।
युक्तेचदैवेयुध्येतजयप्रेप्सुरपेतभीः ॥१९७॥
साम्नादानेनभेदेनसमस्तैरथवापृथक् ।
विजेतुम्प्रयतेतारीन्नयुद्धेनकदाचन ॥१९८॥
अनित्योविजयोयस्माद्दृश्यतेयुध्यमानयोः ।
पराजयश्चसंग्रामेतस्माद्युद्धंविवर्ज्जयेत् ॥१९९॥
त्रयाणामप्युपायानाम्पूर्वोक्तानामसम्भवे ।
तथायुध्येतसम्पन्नोविजयेतरिपून्यथा ॥२००॥
जित्वासम्पूजयेद्देवान्ब्राह्मणांश्चैवधार्मिकान् ।
प्रदद्यात्परिहारांश्चख्यापयेदभयानिच ॥२०१॥
सर्वेषान्तुविदित्वैषांसमासेनचिकीर्षितम् ।
स्थापयेत्तत्रतद्वंश्यंकुर्य्याच्चसमयक्रियाम् ॥२०२॥
प्रमाणानिचकुर्वीततेषान्धर्म्यान्यथोदितान् ।
रत्नैश्चपूजयेदेनम्प्रधानपुरुषैःसह ॥२०३॥
आदानमप्रियकरन्दानंचप्रियकारकम् ।
अभीप्सितानामर्थानांकालेयुक्तम्प्रशस्यते ॥२०४॥
सर्वंकर्मेदमायत्तंविधानेदैवमानुषे ।
तयोर्दैवमचिन्त्यन्तुमानुषेविद्यतेक्रिया ॥२०५॥

सहवाऽपिव्रजेद्युक्तःसन्धिंकृत्वाप्रयत्नतः ।
मित्रंहिरण्यम्भूमिंवासम्पश्यंस्त्रिविधम्फलम् ॥२०६॥
पार्ष्णिग्राहंचसम्प्रेक्ष्यतथाक्रन्दंचमण्डले ।
मित्रादथाप्यमित्राद्वायात्राफलमवाप्नुयात् ॥२०७॥
हिरण्यभूमिसम्प्राप्त्यापार्थिवोनतथैधते ।
यथामित्रन्ध्रुवंलब्ध्वाकृशमप्यायतिक्षमम् ॥२०८॥
धर्म्मज्ञंचकृतज्ञंचतुष्टप्रकृतिमेवच ।
अनुरक्तंस्थिरारम्भंलघुमित्रम्प्रशस्यते ॥२०९॥
प्राज्ञंकुलीनंशूरंचदक्षन्दातारमेवच ।
कृतज्ञन्धृतिमन्तंचकष्टमाहुररिम्बुधाः ॥२१०॥
आर्यतापुरुषज्ञानंशौर्य्यंकरुणवेदिता ।
स्थौललक्ष्यंचसततमुदासीनगुणोदयः ॥२११॥
क्षेम्यांसस्यप्रदान्नित्यम्पशुवृद्धिकरीमपि ।
परित्यजेन्नृपोभूमिमात्मार्थमविचारयन् ॥२१२॥
आपदर्थन्धनंरक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानंसततंरक्षेद्दारैरपिधनैरपि ॥२१३॥
सहसर्वाःसमुत्पन्नाःप्रसमीक्ष्यापदोभृशम् ।
संयुक्तांश्चवियुक्तांश्चसर्वोपायान्सृजेद्बुधः ॥२१४॥

उपेतारमुपेयंचसर्वोपायांश्चकृत्स्नशः । 
एतत्त्रयंसमाश्रित्यप्रयतेतार्थसिद्धये ॥२१५॥ 
एवंसर्वमिदंराजासहसन्मंत्र्यमंत्रिभिः । 
व्यायाम्याप्लुत्यमध्याह्नेभोक्तुमन्तःपुरंविशेत् ॥२१६॥ 
तत्रात्मभूतैःकालज्ञैरहार्यैःपरिचारकैः । 
सुपरीक्षितमन्नाद्यमद्यान्मंत्रैर्विषापहैः ॥२१७॥ 
विषघ्नैरगदैश्चास्यसर्वद्रव्याणियोजयेत् । 
विषघ्नानिचरत्नानिनियतोधारयेत्सदा ॥२१८॥ 
परीक्षिताःस्त्रियश्चैनंव्यजनोदकधूपनैः । 
वेषाभरणसंशुद्धाःस्पृशेयुःसुसमाहिताः ॥२१९॥ 
एवम्प्रयत्नंकुर्वीतयानशय्यासनाशने । 
स्नानेप्रसाधनेचैवसर्वालंकारकेषुच ॥२२०॥ 
भुक्तवान्विहरेच्चैवस्त्रीभिरन्तःपुरेसह । 
विहृत्यतुयथाकालम्पुनःकार्य्याणिचिन्तयेत् ॥२२१॥ 
अलंकृतश्चसम्पश्येदायुधीयम्पुनर्जनम् । 
वाहनानिचसर्वाणिशस्त्राण्याभरणानिच ॥२२२॥ 
सन्ध्यांचोपास्यशृणुयादन्तर्वेश्मनिशस्त्रभृत् । 
रहस्याख्यायिनांचैवप्रणिधीनांचचेष्टितम् ॥२२३॥

गत्वाकक्षान्तरन्त्वन्यत्समनुज्ञाप्यतंजनम् ।
प्रविशेद्भोजनार्थंचस्त्रीवृतोऽन्तःपुरम्पुनः ॥२२४॥
तत्रभुक्त्वापुनःकिंचित्तूर्यघोषैःप्रहर्षितः ।
संविशेत्तुयथाकालमुत्तिष्ठेच्चगतक्लमः ॥२२५॥
एतद्विधानमातिष्ठेदरोगःपृथिवीपतिः ।
अस्वस्थःसर्वमेतत्तुभृत्येषुविनियोजयेत् ॥२२६॥

---

॥ इतिमानवेधर्म्मशास्त्रेभृगुप्रोक्तायांसंहितायाम् ॥
॥ राजधर्म्मोनामसप्तमोऽध्यायः ॥

॥ मानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायामष्टमोऽध्यायः ॥

व्यवहारान्दिदृक्षुस्तुब्राह्मणैःसहपार्थिवः ।
मंत्रज्ञैर्मंत्रिभिश्चैवविनीतःप्रविशेत्सभाम् ॥१॥
तत्रासीनःस्थितोवाऽपिपाणिमुद्यम्यदक्षिणम् ।
विनीतवेषाभरणःपश्येत्कार्य्याणिकार्यिणाम् ॥२॥
प्रत्यहन्देशदृष्टैश्चशास्त्रदृष्टैश्चहेतुभिः ।
अष्टादशसुमार्गेषुनिबद्धानिपृथक्पृथक् ॥३॥
तेषामाद्यमृणादानन्निक्षेपोऽस्वामिविक्रयः ।
सम्भूयचसमुत्थानन्दत्तस्यानपकर्म्मच ॥४॥
वेतनस्यैवचादानंसंविदश्चव्यतिक्रमः ।
क्रयविक्रयानुशयोविवादःस्वामिपालयोः ॥५॥
सीमाविवादधर्म्मश्चपारुष्येदण्डवाचिके ।
स्तेयंचसाहसंचैवस्त्रीसंग्रहणमेवच ॥६॥
स्त्रीपुन्धर्म्मोविभागश्चद्यूतमाह्वयएवच ।
पदान्यष्टादशैतानिव्यवहारस्थिताविह ॥७॥

एषुस्थानेषुभूयिष्ठंविवादंचरतांनृणाम् ।
धर्म्मंशाश्वतमाश्रित्यकुर्य्यात्कार्य्यविनिर्णयम् ॥८॥
यदास्वयन्नकुर्य्यात्तुनृपतिःकार्य्यदर्शनम् ।
तदानियुंज्याद्विद्वांसम्ब्राह्मणंकार्य्यदर्शने ॥९॥
सोऽस्यकार्य्याणिसम्पश्येत्सभ्यैरेवत्रिभिर्वृतः ।
सभामेवप्रविश्याग्र्यामासीनःस्थितएववा ॥१०॥
यस्मिन्देशेनिषीदन्तिविप्रावेदविदस्त्रयः ।
राज्ञश्चाधिकृतोविद्वान्ब्रह्मणस्तांसभांविदुः ॥११॥
धर्म्मोविद्धस्त्वधर्म्मेणसभांयत्रोपतिष्ठते ।
शल्यंचास्यनकृन्तन्तिविद्धास्तत्रसभासदः ॥१२॥
सभांवानप्रवेष्टव्यंवक्तव्यंवासमंजसम् ।
अब्रुवन्विब्रुवन्वाऽपिनरोभवतिकिल्विषी ॥१३॥
यत्रधर्म्मोह्यधर्म्मेणसत्यंयत्रानृतेनच ।
हन्यतेप्रेक्ष्यमाणानांहतास्तत्रसभासदः ॥१४॥
धर्म्मएवहतोहन्तिधर्म्मोरक्षतिरक्षितः ।
तस्माद्धर्म्मोनहन्तव्योमानोधर्म्मोहतोऽवधीत् ॥१५॥
वृषोहिभगवान्धर्म्मस्तस्ययःकुरुतेह्यलम् ।
वृषलन्तंविदुर्देवास्तस्माद्धर्म्मन्नलोपयेत् ॥१६॥

एकएवसुहृद्धर्म्मोनिधनेऽप्यनुयातियः ।
शरीरेणसमन्नाशंसर्वमन्यद्धिगच्छति ॥१७॥
पादोऽधर्म्मस्यकर्त्तारंपादःसाक्षिणमृच्छति ।
पादस्सभासदस्सर्वान्पादोराजानमृच्छति ॥१८॥
राजाभवत्यनेनास्तुमुच्यन्तेचसभासदः ।
एनोगच्छतिकर्त्तारन्निन्दार्होयत्रनिन्द्यते ॥१९॥
जातिमात्रोपजीवीवाकामंस्याद्ब्राह्मणब्रुवः ।
धर्म्मप्रवक्तानृपतेर्नतुशूद्रःकथंचन ॥२०॥
यस्यशूद्रस्तुकुरुतेराज्ञोधर्म्मविवेचनम् ।
तस्यसीदतितद्राष्ट्रम्पंकेगौरिवपश्यतः ॥२१॥
यद्राष्ट्रंशूद्रभूयिष्ठंनास्तिकाक्रान्तमद्विजम् ।
विनश्यत्याशुतत्कृत्स्नन्दुर्भिक्षव्याधिपीडितम् ॥२२॥
धर्मासनमधिष्ठायसंवीतांगःसमाहितः ।
प्रणम्यलोकपालेभ्यःकार्य्यदर्शनमारभेत् ॥२३॥
अर्थानर्थावुभौबुद्ध्वाधर्म्माधर्म्मौचकेवलौ ।
वर्णक्रमेणसर्वाणिपश्येत्कार्य्याणिकार्य्यिणाम् ॥२४॥
बाह्यैर्विभावयेल्लिंगैर्भावमन्तर्गतंनृणाम् ।
स्वरवर्णेंगिताकारैश्चक्षुषाचेष्टितेनच ॥२५॥

आकारैरिङ्गितैर्गत्याचेष्टयाभाषितेनच ।
नेत्रवक्त्रविकारैश्चगृह्यतेऽन्तर्गतम्मनः ॥२६॥
बालदायादिकंरिक्थन्तावद्राजाऽनुपालयेत् ।
यावत्सस्यात्समावृत्तोयावच्चातीतशैशवः ॥२७॥
वशाऽपुत्रासुचैवंस्याद्रक्षणन्निष्कुलासुच ।
पतिव्रतासुचस्त्रीषुविधवास्वातुरासुच ॥२८॥
जीवन्तीनान्तुतासांयेतद्धरेयुःस्वबान्धवाः ।
ताञ्छिष्याच्चौरदण्डेनधार्मिकःपृथिवीपतिः ॥२९॥
प्रणष्टस्वामिकंरिक्थंराजात्र्यब्दन्निधापयेत् ।
अर्वाक्त्र्यब्दाद्धरेत्स्वामीपरेणनृपतिर्हरेत् ॥३०॥
ममेदमितियोब्रूयात्सोऽनुयोज्योयथाविधि ।
संवाद्यरूपसंख्यादीन्स्वामीतद्द्रव्यमर्हति ॥३१॥
अवेदयानोनष्टस्यदेशंकालंचतत्त्वतः ।
वर्णंरूपम्प्रमाणंचतत्समन्दण्डमर्हति ॥३२॥
आददीताथषड्भागम्प्रणष्टाधिगतान्नृपः ।
दशमन्द्वादशंवाऽपिसतांधर्ममनुस्मरन् ॥३३॥
प्रणष्टाधिगतन्द्रव्यन्तिष्ठेद्युक्तैरधिष्ठितम् ।
यांस्तत्रचौरान्गृह्णीयातान्राजेभेनघातयेत् ॥३४॥

ममायमितियोब्रूयान्निधिंसत्येनमानवः ।
तस्याददीतषड्भागंराजाद्वादशमेववा ॥३५॥
अनृतन्तुवदन्दण्ड्यःस्ववित्तस्यांशमष्टमम् ।
तस्यैववानिधानस्यसंख्यायाल्पीयसींकलाम् ॥३६॥
विद्वांस्तुब्राह्मणोदृष्ट्वापूर्वोपनिहितन्निधिम् ।
अशेषतोऽप्याददीतसर्वस्याधिपतिर्हिसः ॥३७॥
यन्तुपश्येन्निधिंराजापुराणंनिहितंक्षितौ ।
तस्माद्द्विजेभ्योदत्वार्द्धमर्द्धंकोषेप्रवेशयेत् ॥३८॥
निधीनान्तुपुराणानान्धातूनामेवचक्षितौ ।
अर्द्धभाग्रक्षणाद्राजाभूमेरधिपतिर्हिसः ॥३९॥
दातव्यंसर्ववर्णेभ्योराज्ञाचौरैर्हृतन्धनम् ।
राजातदुपयुंजानश्चौरस्याप्नोतिकिल्विषम् ॥४०॥
जातिजानपदान्धर्माञ्छ्रेणीधर्मांश्चधर्मवित् ।
समीक्ष्यकुलधर्मांश्चस्वधर्मम्प्रतिपादयेत् ॥४१॥
स्वानिकर्माणिकुर्वाणादूरेसन्तोऽपिमानवाः ।
प्रियाभवन्तिलोकस्यस्वेस्वेकर्मण्यवस्थिताः ॥४२॥
नोत्पादयेत्स्वयंकार्य्यंराजानाप्यस्यपूरुषः ।
नचप्रापितमन्येनग्रसेदर्थंकथंचन ॥४३॥

यथानयत्यसृक्पातैर्मृगस्यमृगयुःपदम् ।
नयेत्तथाऽनुमानेनधर्मस्यनृपतिःपदम् ॥४४॥
सत्यमर्थंचसम्पश्येदात्मानमथसाक्षिणः ।
देशंरूपंचकालंचव्यवहारविधौस्थितः ॥४५॥
सद्भिराचरितंयत्स्याद्धार्मिकैश्चद्विजातिभिः ।
तद्देशकुलजातीनामविरुद्धम्प्रकल्पयेत् ॥४६॥
अधमर्णार्थसिद्ध्यर्थमुत्तमर्णेनचोदितः ।
दापयेद्धनिकस्यार्थमधमर्णाद्विभावितम् ॥४७॥
यैर्यैरुपायैरर्थंस्वम्प्राप्नुयादुत्तमर्णिकः ।
तैस्तैरुपायैःसंगृह्यदापयेदधमर्णिकम् ॥४८॥
धर्म्मेणव्यवहारेणच्छलेनाचरितेनच ।
प्रयुक्तंसाधयेदर्थम्पंचमेनबलेनच ॥४९॥
यःस्वयंसाधयेदर्थमुत्तमर्णोऽधमर्णिकात् ।
नसराज्ञाऽभियोक्तव्यःस्वकंसंसाधयन्धनम् ॥५०॥
अर्थेऽपव्ययमानन्तुकरणेनविभावितम् ।
दापयेद्धनिकस्यार्थन्दण्डलेशंचशक्तितः ॥५१॥
अपह्नवेऽधमर्णस्यदेहीत्युक्तस्यसंसदि ।
अभियोक्तादिशेद्देश्यंकरणंवाऽन्यदुद्दिशेत् ॥५२॥

अदेश्यंयश्चदिशतिनिर्दिश्यापह्नुतेचयः ।
यश्चाधरोत्तरानर्थान्विगीतान्नावबुध्यते ॥५३॥
अपदिश्यापदेश्यंचपुनर्यस्त्वपधावति ।
सम्यक्प्रणिहितंचार्थम्पृष्टःसन्नाभिनन्दति ॥५४॥
असम्भाष्येसाक्षिभिश्चदेशेसम्भाषतेमिथः ।
निरुच्यमानम्प्रश्नंचनेच्छेद्यश्चापिनिष्पतेत् ॥५५॥
ब्रूहीत्युक्तश्चनब्रूयादुक्तंचनविभावयेत् ।
नचपूर्वापरंविद्यात्तस्मादर्थात्सहीयते ॥५६॥
साक्षिणःसन्तिमेत्युक्त्वादिशेत्युक्तोदिशेन्नयः ।
धर्मस्थःकारणैरेतैर्हीनन्तमपिनिर्दिशेत् ॥५७॥
अभियोक्तानचेद्ब्रूयाद्बध्योदण्ड्यश्चधर्मतः ।
नचेत्त्रिपक्षात्प्रब्रूयाद्धर्मम्प्रतिपराजितः ॥५८॥
योयावन्निह्नुवीतार्थंमिथ्यायावतिवावदेत् ।
तौनृपेणह्यधर्मज्ञौदाप्यौतद्द्विगुणन्दमम् ॥५९॥
पृष्टोऽपव्ययमानस्तुकृतावस्थोधनैषिणा ।
त्र्यवरैःसाक्षिभिर्भाव्योनृपब्राह्मणसन्निधौ ॥६०॥
यादृशाधनिभिःकार्याव्यवहारेषुसाक्षिणः ।
तादृशान्सम्प्रवक्ष्यामियथावाच्यमृतंचतैः ॥६१॥

गृहिणःपुत्रिणोमौलाःक्षत्रविट्शूद्रयोनयः ।
अर्थ्युक्ताःसाक्ष्यमर्हन्तिनयेकेचिदनापदि ॥६२॥
आप्ताःसर्वेषुवर्णेषुकार्य्याःकार्य्येषुसाक्षिणः ।
सर्वधर्मविदोऽलुब्धाविपरीतांस्तुवर्जयेत् ॥६३॥
नार्थसम्बन्धिनोनाप्तानसहायानवैरिणः ।
नदृष्टदोषाःकर्त्तव्यानव्याध्यार्त्तानदूषिताः ॥६४॥
नसाक्षीनृपतिःकार्य्योनकारुककुशीलवौ ।
नश्रोत्रियोनलिंगस्थोनसंगेभ्योविनिर्गतः ॥६५॥
नाध्यधीनोनवक्तव्योनदस्युर्नविकर्मकृत् ।
नवृद्धोनशिशुर्नैकोनान्त्योनविकलेन्द्रियः ॥६६॥
नार्त्तोनिमत्तोनोन्मत्तोनक्षुत्तृष्णोपपीडितः ।
नश्रमार्त्तोनकामार्त्तोनक्रुद्धोनापितस्करः ॥६७॥
स्त्रीणांसाक्ष्यंस्त्रियःकुर्य्युर्द्विजानांसदृशाद्विजाः ।
शूद्राश्चसन्तःशूद्राणामन्त्यानामन्त्ययोनयः ॥६८॥
अनुभावीतुयःकश्चित्कुर्य्यात्साक्ष्यंविवादिनाम् ।
अन्तर्वेश्मन्यरण्येवाशरीरस्यापिचात्यये ॥६९॥
स्त्रियाऽप्यसम्भवेकार्य्यम्बालेनस्थविरेणवा ।
शिष्येणबन्धुनावाऽपिदासेनभृतकेनवा ॥७०॥

बालवृद्धातुराणांचसाक्ष्येषुवदताम्मृषा ।
जानीयादस्थिरांवाचमुत्सिक्तमनसान्तथा ॥७१॥
साहसेषुचसर्वेषुस्तेयसंग्रहणेषुच ।
वाग्दण्डयोश्चपारुष्येनपरीक्षेतसाक्षिणः ॥७२॥
बहुत्वम्परिगृह्णीयात्साक्षिद्वैधेनराधिपः ।
समेषुतुगुणोत्कृष्टान्गुणिद्वैधेद्विजोत्तमान् ॥७३॥
समक्षदर्शनात्साक्ष्यंश्रवणाच्चैवसिध्यति ।
तत्रसत्यंब्रुवन्साक्षीधर्म्मार्थाभ्यान्नहीयते ॥७४॥
साक्षीदृष्टश्रुतादन्यद्विब्रुवन्नार्य्यसंसदि ।
अवाङ्नरकमभ्येतिप्रेत्यस्वर्गाच्चहीयते ॥७५॥
यत्रानिबद्धोऽपीक्षेतशृणुयाद्वाऽपिकिंचन ।
पृष्टस्तत्रापितद्ब्रूयाद्यथादृष्टंयथाश्रुतम् ॥७६॥
एकोऽलुब्धस्तुसाक्षीस्याद्बह्व्यःशुच्योऽपिनस्त्रियः ।
स्त्रीबुद्धेरस्थिरत्वात्तुदोषैश्चान्येऽपियेवृताः ॥७७॥
स्वभावेनैवयद्ब्रूयुस्तद्ग्राह्यंव्यावहारिकम् ।
अतोयदन्यद्विब्रूयुर्धर्मार्थन्तदपार्थकम् ॥७८॥
सभान्तःसाक्षिणःप्राप्तानर्थिप्रत्यर्थिसन्निधौ ।
प्राड्विवाकोऽनुयुंजीतविधिनाऽनेनसान्त्वयन् ॥७९॥

यद्द्वयोरनयोर्वेत्थकार्य्येऽस्मिन्चेष्टितम्मिथः ।
तद्ब्रूतसर्वंसत्येनयुष्माकंह्यत्रसाक्षिता ॥८०॥
सत्यंसाक्ष्येब्रुवन्साक्षीलोकानाप्नोतिपुष्कलान् ।
इहचानुत्तमांकीर्त्तिंवागेषाब्रह्मपूजिता ॥८१॥
साक्ष्येऽनृतंवदन्पाशैर्बध्यतेवारुणैर्भृशम् ।
विवशःशतमाजातीस्तस्मात्साक्ष्यंवदेदृतम् ॥८२॥
सत्येनपूयतेसाक्षीधर्म्मःसत्येनवर्द्धते ।
तस्मात्सत्यंहिवक्तव्यंसर्ववर्णेषुसाक्षिभिः ॥८३॥
आत्मैवह्यात्मनःसाक्षीगतिरात्मातथात्मनः ।
माऽवमंस्थाःस्वमात्मानंनृणांसाक्षिणमुत्तमम् ॥८४॥
मन्यन्तेवैपापकृतोनकश्चित्पश्यतीतिनः ।
तांस्तुदेवाःप्रपश्यन्तिस्वस्यैवान्तरपूरुषः ॥८५॥
द्यौर्भूमिरापोहृदयंचन्द्रार्काग्नियमानिलाः ।
रात्रिःसन्ध्येचधर्म्मश्चवृत्तज्ञाःसर्वदेहिनाम् ॥८६॥
देवब्राह्मणसान्निध्येसाक्ष्यम्पृच्छेदृतंद्विजान् ।
उदङ्मुखान्प्राङ्मुखान्वापूर्वाह्णेवैशुचिःशुचीन् ॥८७॥
ब्रूहीतिब्राह्मणम्पृच्छेत्सत्यम्ब्रूहीतिपार्थिवम् ।
गोवीजकांचनैर्वैश्यंशूद्रंसर्वैस्तुपातकैः ॥८८॥

ब्रह्मघ्नोयेस्मृतालोकायेचस्त्रीबालघातिनः ।
मित्रद्रुहःकृतघ्नस्यतेतेस्युर्ब्रुवतोमृषा ॥८९॥
जन्मप्रभृतियत्किंचित्पुण्यम्भद्रत्वयाकृतम् ।
ततेसर्वंशुनोगच्छेद्यदिब्रूयास्त्वमन्यथा ॥९०॥
एकोऽहमस्मीत्यात्मानंयत्त्वंकल्याणमन्यसे ।
नित्यंस्थितस्तेहृद्येषपुण्यपापेक्षितामुनिः ॥९१॥
यमोवैवस्वतोदेवोयस्तवैषहृदिस्थितः ।
तेनचेदविवादस्तेमागंगाम्माकुरूनगमः ॥९२॥
नग्नोमुण्डःकपालेनभिक्षार्थीक्षुत्पिपासितः ।
अन्धःशत्रुकुलंगच्छेद्यःसाक्ष्यमनृतंवदेत् ॥९३॥
अवाक्शिरास्तमस्यन्धेकिल्विषीनरकंव्रजेत् ।
यःप्रश्नंवितथम्ब्रूयात्पृष्टःसन्धर्मनिश्चये ॥९४॥
अन्धोमत्स्यानिवाश्नातिसनरःकंटकैःसह ।
योभाषतेऽर्थवैकल्पमप्रत्यक्षंसभांगतः ॥९५॥
यस्यविद्वान्हिवदतःक्षेत्रज्ञोनाभिशंकते ।
तस्मान्नदेवाःश्रेयांसंलोकेऽन्यम्पुरुषंविदुः ॥९६॥
यावतोबान्धवान्यस्मिन्हन्तिसाक्ष्येऽनृतंवदन् ।
तावतःसंख्ययातस्मिन्शृणुसौम्यानुपूर्वशः ॥९७॥

पंचपश्वनृतेहन्तिदशहन्तिगवानृते ।
शतमश्वानृतेहन्तिसहस्रम्पुरुषानृते ॥९८॥
हन्तिजातानजातांश्चहिरण्यार्थेऽनृतंवदन् ।
सर्वम्भूम्यनृतेहन्तिमास्मभूम्यनृतंवदीः ॥९९॥
अप्सुभूमिवदित्याहुःस्त्रीणाम्भोगेचमैथुने ।
अब्जेषुचैवरत्नेषुसर्वेष्वश्ममयेषुच ॥१००॥
एतान्दोषानवेक्ष्यत्वंसर्वाननृतभाषणे ।
यथाश्रुतंयथादृष्टंसर्वमेवांजसावद ॥१०१॥
गोरक्षकान्वाणिजिकांस्तथाकारुकुशीलवान् ।
प्रेष्यान्वार्द्धुषिकांश्चैवविप्रान्शूद्रवदाचरेत् ॥१०२॥
तद्वदन्धर्मतोऽर्थेषुजानन्नप्यन्यथानरः ।
नस्वर्गाच्च्यवतेलोकाद्दैवींवाचंवदन्तिताम् ॥१०३॥
शूद्रविट्क्षत्रविप्राणांयत्रर्तोक्तौभवेद्वधः ।
तत्रवक्तव्यमनृतन्तद्धिसत्याद्विशिष्यते ॥१०४॥
वाग्दैवत्यैश्चचरुभिर्यजेरंस्तेसरस्वतीम् ।
अनृतस्यैनसस्तस्यकुर्वाणानिष्कृतिम्पराम् ॥१०५॥
कूष्माण्डैर्वाऽपिजुहुयाद्घृतमग्नौयथाविधि ।
उदित्यृचावावारुण्यात्र्यृचेनाब्दैवतेनवा ॥१०६॥

त्रिपक्षादब्रुवन्साक्ष्यमृणादिषु नरोऽगदः ।
तदृणम्प्राप्नुयात्सर्वन्दशबन्धंच सर्वतः ॥१०७॥
यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः ।
रोगोऽग्निर्ज्ञातिमरणमृणन्दाप्योदमंच सः ॥१०८॥
असाक्षिकेषु त्वर्थेषु मिथो विवदमानयोः ।
अविन्दंस्तत्त्वतस्सत्यंशपथेनापिलम्भयेत् ॥१०९॥
महर्षिभिश्च देवैश्च कार्यार्थं शपथाः कृताः ।
वसिष्ठश्चापि शपथं शेपे पैयवने नृपे ॥११०॥
न वृथा शपथं कुर्यात्स्वल्पेऽप्यर्थे नरो बुधः ।
वृथा हि शपथं कुर्वन्प्रेत्य चेह च नश्यति ॥१११॥
कामिनीषु विवाहेषु गवाम्भक्ष्ये तथेन्धने ।
ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम् ॥११२॥
सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोवीजकांचनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥११३॥
अग्निं वाहारयेदेनमप्सु चैनन्निमज्जयेत् ।
पुत्रदारस्य वाप्येनं शिरांसि स्पर्शयेत्पृथक् ॥११४॥
यमिद्धो न दहत्यग्निरापो नोन्मज्जयन्ति च ।
न चार्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः ॥११५॥

वत्सस्यह्यभिशस्तस्यपुराभ्रात्रायवीयसा ।
नाग्निर्द्ददाहरोमापिसत्येनजगतःस्पृशः ॥११६॥
यस्मिन्यस्मिन्विवादेतुकौटसाक्ष्यंकृतम्भवेत् ।
ततत्कार्य्यंनिवर्त्तेतकृतंचाप्यकृतम्भवेत् ॥११७॥
लोभान्मोहाद्भयान्मैत्रात्कामात्क्रोधात्तथैवच ।
अज्ञानाद्बालभावाच्चसाक्ष्यंवितथमुच्यते ॥११८॥
एषामन्यतमेस्थानेयःसाक्ष्यमनृतंवदेत् ।
तस्यदण्डविशेषांस्तुप्रवक्ष्याम्यनुपूर्वशः ॥११९॥
लोभात्सहस्रन्दण्ड्यस्तुमोहात्पूर्वन्तुसाहसम् ।
भयाद्द्वौमध्यमौदण्डौमैत्रात्पूर्वंचतुर्गुणम् ॥१२०॥
कामाद्दशगुणम्पूर्वंक्रोधात्तुत्रिगुणम्परम् ।
अज्ञानाद्द्वेशतेपूर्णेबालिश्याच्छतमेवतु ॥१२१॥
एतानाहुःकौटसाक्ष्येप्रोक्तान्दण्डान्मनीषिभिः ।
धर्म्मस्याव्यभिचारार्थमधर्म्मनियमायच ॥१२२॥
कौटसाक्ष्यंतुकुर्वाणास्त्रीन्वर्णान्धार्मिकोनृपः ।
प्रवासयेद्दण्डयित्वाब्राह्मणन्तुविवासयेत् ॥१२३॥
दशस्थानानिदण्डस्यमनुःस्वायम्भुवोऽब्रवीत् ।
त्रिषुवर्णेषुयानिस्युरक्षतोब्राह्मणोव्रजेत् ॥१२४॥

उपस्थमुदरंजिह्वाहस्तौपादौचपंचमम् ।
चक्षुर्नासाचकर्णौचधनन्देहस्तथैवच ॥१२५॥
अनुबन्धम्परिज्ञायदेशकालौचतत्त्वतः ।
सारापराधौचालोक्यदण्डंदण्ड्येषुपातयेत् ॥१२६॥
अधर्म्मदण्डनंलोकेयशोघ्नंकीर्त्तिनाशनम् ।
अस्वर्ग्यंचपरत्रापितस्मात्तत्परिवर्ज्जयेत् ॥१२७॥
अदण्ड्यान्दण्डयन्राजादण्ड्यांश्चैवाप्यदण्डयन् ।
अयशोमहदाप्नोतिनरकंचैवगच्छति ॥१२८॥
वाग्दण्डम्प्रथमंकुर्य्याद्धिग्दण्डन्तदनन्तरम् ।
तृतीयन्धनदण्डन्तुबधदण्डमतःपरम् ॥१२९॥
बधेनापियदात्वेतान्निग्रहीतुन्नशक्नुयात् ।
तदेषुसर्वमप्येतत्प्रयुंजीतचतुष्टयम् ॥१३०॥
लोकसंव्यवहारार्थंयाःसंज्ञाःप्रथिताभुवि ।
ताम्ररूप्यसुवर्णानान्ताःप्रवक्ष्याम्यशेषतः ॥१३१॥
जालान्तरगतेभानौयत्सूक्ष्मन्दृश्यतेरजः ।
प्रथमन्तत्प्रमाणानांत्रसरेणुम्प्रचक्षते ॥१३२॥
त्रसरेणवोऽष्टौविज्ञेयालिक्षैकापरिमाणतः ।
ताराजसर्षपस्तिस्रस्तेत्रयोगौरसर्षपः ॥१३३॥

सर्षपाःषड्यवोमध्यस्त्रियवन्त्वेककृष्णलम् ।
पंचकृष्णलकोमाषस्तेसुवर्णस्तुषोडश ॥१३४॥
पलंसुवर्णाश्चत्वारःपलानिधरणन्दश ।
द्वेकृष्णलेसमधृतेविज्ञेयोरौप्यमाषकः ॥१३५॥
तेषोडशस्याद्धरणम्पुराणश्चैवराजतः ।
कार्षापणस्तुविज्ञेयस्ताम्रिकःकार्षिकःपणः ॥१३६॥
धरणानिदशज्ञेयःशतमानस्तुराजतः ।
चतुःसौवर्णिकोनिष्कोविज्ञेयस्तुप्रमाणतः ॥१३७॥
पणानान्द्वेशतेसार्द्धेप्रथमःसाहसःस्मृतः ।
मध्यमःपंचविज्ञेयःसहस्रन्त्वेवचोत्तमः ॥१३८॥
ऋणेदेयेप्रतिज्ञातेपंचकंशतमर्हति ।
अपह्नवेतद्द्विगुणन्तन्मनोरनुशासनम् ॥१३९॥
वसिष्ठविहितांवृद्धिंसृजेद्वित्तविवर्द्धिनीम् ।
अशीतिभागंगृह्णीयान्मासाद्वार्द्धुषिकःशते ॥१४०॥
द्विकंशतंवागृह्णीयात्सतान्धर्ममनुस्मरन् ।
द्विकंशतंहिगृह्णानोनभवत्यर्थकिल्बिषी ॥१४१॥
द्विकंत्रिकंचतुष्कंचपंचकंचशतंसमम् ।
मासस्यवृद्धिंगृह्णीयाद्वर्णानामनुपूर्वशः ॥१४२॥

नत्वेवाधौसोपकारेकौसीदींवृद्धिमाप्नुयात् ।
नचाधेःकालसंरोधान्निसर्गोऽस्तिनविक्रयः ॥१४३॥
नभोक्तव्योबलादाधिर्भुंजानोवृद्धिमुत्सृजेत् ।
मूल्येनतोषयेच्चैनमाधिस्तेनोऽन्यथाभवेत् ॥१४४॥
आधिश्चोपनिधिश्चोभौनकालात्ययमर्हतः ।
अवहार्यौभवेतान्तौदीर्घकालमवस्थितौ ॥१४५॥
सम्प्रीत्याभुज्यमानानिननश्यन्तिकदाचन ।
धेनुरुष्ट्रोवहन्नश्वोयश्चदम्यःप्रयुज्यते ॥१४६॥
यत्किंचिद्दशवर्षाणिसन्निधौप्रेक्षतेधनी ।
भुज्यमानम्परैस्तूष्णीन्नसतल्लब्धुमर्हति ॥१४७॥
अजडश्चेदपोगण्डोविषयेचास्यभुज्यते ।
भग्नन्तद्व्यवहारेणभोक्तातद्द्रव्यमर्हति ॥१४८॥
आधिःसीमाबालधनंनिक्षेपोपनिधिःस्त्रियः ।
राजस्वंश्रोत्रियस्वंचनभोगेनप्रणश्यति ॥१४९॥
यःस्वामिनाऽननुज्ञातमाधिम्भुंक्तेऽविचक्षणः ।
तेनार्द्धवृद्धिर्मोक्तव्यातस्यभोगस्यनिष्कृतिः ॥१५०॥
कुसीदवृद्धिर्द्वैगुण्यंनात्येतिसकृदाहृता ।
धान्येसदेलवेवाह्येनातिक्रामतिपंचताम् ॥१५१॥

कृतानुसारादधिकाव्यतिरिक्तानसिध्यति ।
कुसीदपथमाहुस्तम्पंचकंशतमर्हति ॥१५२॥
नातिसांवत्सरींवृद्धिन्नचादृष्टाम्पुनर्हरेत् ।
चक्रवृद्धिःकालवृद्धिःकारिताकायिकाचयां ॥१५३॥
ऋणन्दातुमशक्तोयःकर्तुमिच्छेत्पुनःक्रियाम् ।
सदत्वानिर्जितांवृद्धिंकरणम्परिवर्तयेत् ॥१५४॥
अदर्शयित्वातत्रैवहिरण्यम्परिवर्तयेत् ।
यावतीसम्भवेद्वृद्धिस्तावतीन्दातुमर्हति ॥१५५॥
चक्रवृद्धिंसमारूढोदेशकालव्यवस्थितः ।
अतिक्रामन्देशकालौनतत्फलमवाप्नुयात् ॥१५६॥
समुद्रयानकुशलादेशकालार्थदर्शिनः ।
स्थापयन्तितुयांवृद्धिंसातत्राधिगमम्प्रति ॥१५७॥
योयस्यप्रतिभूस्तिष्ठेद्दर्शनायेहमानवः ।
अदर्शयन्सतन्तस्यप्रयच्छेत्स्वधनादृणम् ॥१५८॥
प्रातिभाव्यंवृथादानमाक्षिकंसौरिकंचयत् ।
दण्डशुल्कावशेषंचनपुत्रोदातुमर्हति ॥१५९॥
दर्शनप्रातिभाव्येतुविधिःस्यात्पूर्वचोदितः ।
दानप्रतिभुविप्रेतेदायादानपिदापयेत् ॥१६०॥

अदातरिपुनर्दाताविज्ञातप्रकृतावृणम् ।
पश्चात्प्रतिभुविप्रेतेपरीप्सेत्केनहेतुना ॥१६१॥
निरादिष्टधनश्चेत्तुप्रतिभूःस्यादलन्धनः ।
स्वधनादेवतद्दद्यान्निरादिष्टइतिस्थितिः ॥१६२॥
मत्तोन्मत्तार्त्ताध्यधीनैर्बालेनस्थविरेणवा ।
असम्बद्धकृतश्चैवव्यवहारोनासध्यति ॥१६३॥
सत्यानभाषाभवतियद्यपिस्यात्प्रतिष्ठिता ।
वहिश्चेद्भाषतेधर्म्मान्नियताद्व्यावहारिकात् ॥१६४॥
योगाधमनविक्रीतंयोगदानप्रतिग्रहम् ।
यत्रवाऽप्युपधिम्पश्येत्तत्सर्वंविनिवर्त्तयेत् ॥१६५॥
ग्रहीतायदिनष्टःस्यात्कुटुम्बार्थेकृतोव्ययः ।
दातव्यम्बान्धवैस्तत्स्यात्प्रविभक्तैरपिस्वतः ॥१६६॥
कुटुम्बार्थेऽध्यधीनोऽपिव्यवहारंयमाचरेत् ।
स्वदेशेवाविदेशेवातंज्यायान्नविचालयेत् ॥१६७॥
बलाद्दत्तम्बलाद्भुक्तम्बलाद्यच्चापिलेखितम् ।
सर्वान्बलकृतानर्थानकृतान्मनुरब्रवीत् ॥१६८॥
त्रयःपरार्थेक्लिश्यन्तिसाक्षिणःप्रतिभूःकुलम् ।
चत्वारस्तूपचीयन्तेविप्रआढ्योवणिङ्नृपः ॥१६९॥

अनादेयन्नाददीतपरिक्षीणोऽपिपार्थिवः ।
नचादेयंसमृद्धोऽपिसूक्ष्ममप्यर्थमुत्सृजेत् ॥१७०॥
अनादेयस्यचादानादादेयस्यचवर्जनात् ।
दौर्बल्यंख्याप्यतेराज्ञःसप्रेत्येहचनश्यति ॥१७१॥
स्वादानाद्वर्णसंसर्गात्त्वबलानाचरक्षणात् ।
बलंसंजायतेराज्ञःसप्रेत्येहचवर्द्धते ॥१७२॥
तस्माद्यमइवस्वामीस्वयंहित्वाप्रियाप्रिये ।
वर्त्तेतयाम्ययावृत्त्याजितक्रोधोजितेन्द्रियः ॥१७३॥
यस्त्वधर्मेणकार्याणिमोहात्कुर्यान्नराधिपः ।
अचिरात्तन्दुरात्मानंवशेकुर्वन्तिशत्रवः ॥१७४॥
कामक्रोधौतुसंयम्ययोऽर्थान्धर्मेणपश्यति ।
प्रजास्तमनुवर्त्तन्तेसमुद्रमिवसिन्धवः ॥१७५॥
यःसाधयन्तंछन्देनवेदयेद्धनिकंनृपे ।
सराज्ञातच्चतुर्भागन्दाप्यस्तस्यचतद्धनम् ॥१७६॥
कर्म्मणाऽपिसमंकुर्याद्धनिकायाधमर्णिकः ।
समोऽवकृष्टजातिस्तुदद्याच्छ्रेयांस्तुतच्छनैः ॥१७७॥
अनेनविधिनाराजामिथोविवदतान्नृणाम् ।
साक्षिप्रत्ययसिद्धानिकार्याणिसमतान्नयेत् ॥१७८॥

कुलजेवृत्तसम्पन्नेधर्मज्ञेसत्यवादिनि ।
महापक्षेधनिन्यार्य्येनिक्षेपन्निक्षिपेद्बुधः ॥१७९॥
योयथानिक्षिपेद्धस्तेयमर्थंयस्यमानवः ।
सतथैवग्रहीतव्योयथादायस्तथाग्रहः ॥१८०॥
योनिक्षेपंयाच्यमानोनिक्षेप्तुर्नप्रयच्छति ।
सयाच्यःप्राड्विवाकेनतन्निःक्षेप्तुरसन्निधौ ॥१८१॥
साक्ष्यभावेप्रणिधिभिर्वयोरूपसमन्वितैः ।
अपदेशैश्वसंन्यस्यहिरण्यन्तस्यतत्वतः ॥१८२॥
सयदिप्रतिपद्येतयथान्यस्तंयथाकृतम् ।
नतत्रविद्यतेकिंचिद्यत्परैरभियुज्यते ॥१८३॥
तेषान्नदद्याद्यदितुतद्धिरण्यंयथाविधि ।
उभौनिगृह्यदाप्यःस्यादितिधर्मस्यधारणा ॥१८४॥
निक्षेपोपनिधीनित्यंनदेयौप्रत्यनन्तरे ।
नश्यतोविनिपातेतावनिपातेत्वनाशिनौ ॥१८५॥
स्वयमेवतुयोदद्यान्मृतस्यप्रत्यनन्तरे ।
नसराज्ञानियोक्तव्योननिक्षेप्तुश्चबन्धुभिः ॥१८६॥
अच्छलेनैवचान्विच्छेत्तमर्थम्प्रीतिपूर्वकम् ।
विचार्य्यतस्यवावृत्तंसाम्नैवपरिसाधयेत् ॥१८७॥

निक्षेपेष्वेषुसर्वेषुविधिःस्यात्परिसाधने ।
समुद्रेनाप्नुयात्किंचिद्यदितस्मान्नसंहरेत् ॥१८८॥
चौरैर्हृतंजलेमोढमग्निनादग्धमेववा ।
नदद्याद्यदितस्मात्सनसंहरतिकिंचन ॥१८९॥
निक्षेपस्यापहर्त्तारमनिक्षेप्तारमेवच ।
सर्वैरुपायैरन्विच्छेच्छपथैश्चैववैदिकैः ॥१९०॥
योनिक्षेपन्नार्पयतियश्चानिक्षिप्ययाचते ।
तावुभौचौरवच्छास्यौदाप्यौवातत्समन्दमम् ॥१९१॥
निक्षेपस्यापहर्त्तारन्तत्समन्दापयेद्दमम् ।
तथोपनिधिहर्त्तारमविशेषेणपार्थिवः ॥१९२॥
उपधाभिश्चयःकश्चित्परद्रव्यंहरेन्नरः ।
ससहायःसहन्तव्यःप्रकाशंविविधैर्बधैः ॥१९३॥
निक्षेपोयःकृतोयेनयावांश्चकुलसन्निधौ ।
तावानेवसविज्ञेयोविब्रुवन्दण्डमर्हति ॥१९४॥
मिथोदायःकृतोयेनगृहीतोमिथएववा ।
मिथएवप्रदातव्योयथादायस्तथाग्रहः ॥१९५॥
निक्षिप्तस्यधनस्यैवम्प्रीत्योपनिहितस्यच ।
राजाविनिर्णयंकुर्यादक्षिण्वन्न्यासधारिणम् ॥१९६॥

विक्रीणीतेपरस्यस्वंयोऽस्वामीस्वाम्यसम्मतः ।
नतन्नयेतसाक्ष्यन्तुस्तेनमस्तेनमानिनम् ॥१९७॥
अवहार्य्योभवेच्चैवसान्वयःषट्शतन्दमम् ।
निरन्वयोऽनपसरःप्राप्तःस्याच्चौरकिल्बिषम् ॥१९८॥
अस्वामिनाकृतोयस्तुदायोविक्रयएववा ।
अकृतःसतुविज्ञेयोव्यवहारेयथास्थितिः ॥१९९॥
सम्भोगोदृश्यतेयत्रनदृश्येतागमःक्वचित् ।
आगमःकारणन्तत्रनसम्भोगइतिस्थितिः ॥२००॥
विक्रयाद्योधनंकिंचिद्गृह्णीयात्कुलसन्निधौ ।
क्रयेणसविशुद्धंहिन्यायतोलभतेधनम् ॥२०१॥
अथमूलमनाहार्य्यम्प्रकाशक्रयशोधितः ।
अदण्ड्योमुच्यतेराज्ञानाष्टिकोलभतेधनम् ॥२०२॥
नान्यदन्येनसंसृष्टरूपंविक्रयमर्हति ।
नचासारंनचन्यूनन्नदूरेनतिरोहितम् ॥२०३॥
अन्यांचेद्दर्शयित्वाऽन्यावोढुःकन्याप्रदीयते ।
उभेतेएकशुल्केनवहेदित्यब्रवीन्मनुः ॥२०४॥
नोन्मत्तायानकुष्ठिन्यानचयास्पृष्टमैथुना ।
पूर्वंदोषानभिख्याप्यप्रदातादण्डमर्हति ॥२०५॥

ऋत्विग्यदिवृतोयज्ञेस्वकर्मपरिहापयेत् ।
तस्यकर्म्मानुरूपेणदेयोंऽशःसहकर्तृभिः ॥२०६॥
दक्षिणासुचदत्तासुस्वकर्म्मपरिहापयन् ।
कृत्स्नमेवलभेतांशमन्येनैवचकारयेत् ॥२०७॥
यस्मिन्कर्मणियास्तुस्युरुक्ताःप्रत्यंगदक्षिणाः ।
सएवताआददीतभजेरन्सर्वएववा ॥२०८॥
रथंहरेतचाध्वर्य्युर्ब्रह्माधानेचवाजिनम् ।
होतावाऽपिहरेदश्वमुद्गाताचाप्यनःक्रये ॥२०९॥
सर्वेषामर्द्धिनोमुख्यास्तदर्द्धेनार्द्धिनोऽपरे ।
तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्चपादिनः ॥२१०॥
सम्भूयस्वानिकर्माणिकुर्वद्भिरिहमानवैः ।
अनेनविधियोगेनकर्त्तव्यांशप्रकल्पना ॥२११॥
धर्मार्थंयेनदत्तंस्यात्कस्मैचिद्याचतेधनम् ।
पश्चाच्चनतथातत्स्यान्नदेयन्तस्यतद्भवेत् ॥२१२॥
यदिसंसाधयेत्तत्तुदर्पाल्लोभेनवापुनः ।
राज्ञादाप्यःसुवर्णंस्यात्तस्यस्तेयस्यनिष्कृतिः ॥२१३॥
दत्तस्यैषोदिताधर्म्यायथावद्दनपक्रिया ।
अतऊर्द्ध्वम्प्रवक्ष्यामिवेतनस्यानपक्रियाम् ॥२१४॥

भृतोनार्त्तोनकुर्य्याद्योदर्पात्कर्मयथोदितम् ।
सदण्ड्यःकृष्णलान्यष्टौनदेयंचास्यवेतनम् ॥२१५॥
आर्त्तस्तुकुर्यात्सुस्थःसन्यथाभाषितमादितः ।
सदीर्घस्यापिकालस्यतल्लभेतैववेतनम् ॥२१६॥
यथोक्तमार्त्तःसुस्थोवायस्तत्कर्मनकारयेत् ।
नतस्यवेतनन्देयमल्पोनस्यापिकर्मणः ॥२१७॥
एषधर्म्मोऽखिलेनोक्तोवेतनादानकर्म्मणः ॥
अतऊर्द्ध्वम्प्रवक्ष्यामिधर्म्मसमयभेदिनाम् ॥२१८॥
योग्रामदेशसंघानांकृत्वासत्येनसंविदम् ।
विसंवदेन्नरोलोभात्तंराष्ट्राद्विप्रवासयेत् ॥२१९॥
निगृह्यदापयेच्चैनंसमयव्यभिचारिणम् ।
चतुःसुवर्णान्षण्णिष्कान्छतमानंचराजतम् ॥२२०॥
एतद्दण्डविधिंकुर्य्याद्धार्मिकःपृथिवीपतिः ।
ग्रामजातिसमूहेषुसमयव्यभिचारिणाम् ॥२२१॥
क्रीत्वाविक्रीयवाकिंचिद्यस्येहानुशयोभवेत् ।
सोऽन्तर्दशाहात्तद्द्रव्यन्दद्याच्चैवाददीतच ॥२२२॥
परेणतुदशाहस्यनदद्यान्नापिदापयेत् ।
आददानोददच्चैवराज्ञादण्ड्यःशतानिषट् ॥२२३॥

यस्तुदोषवतींकन्यामनाख्यायप्रयच्छति ।
तस्यकुर्य्यान्नृपोदण्डंस्वयंषण्णवतिम्पणान् ॥२२४॥
अकन्येतितुयःकन्याम्ब्रूयाद्द्वेषेणमानवः ।
सशतम्प्राप्नुयाद्दण्डन्तस्यादोषमदर्शयम् ॥२२५॥
पाणिग्रहणिकामंत्राःकन्यास्वेवप्रतिष्ठिताः ।
नाकन्यासुक्वचिन्नृणांलुप्तधर्मक्रियाहिताः ॥२२६॥
पाणिग्रहणिकामंत्रानियतन्दारलक्षणम ।
तेषान्निष्ठातुविज्ञेयाविद्वद्भिःसप्तमेपदे ॥२२७॥
यस्मिन्यस्मिन्कृतेकार्य्येयस्येहानुशयोभवेत् ।
तमनेनविधानेनधर्म्येपथिनिवेशयेत् ॥२२८॥
पशुषुस्वामिनांचैवपालानांचव्यतिक्रमे ।
विवादंसम्प्रवक्ष्यामियथावद्धर्म्मतत्त्वतः ॥२२९॥
दिवावक्तव्यतापालेरात्रौस्वामिनितद्गृहे ।
योगक्षेमेऽन्यथाचेत्तुपालोवक्तव्यतामियात् ॥२३०॥
गोपःक्षीरभृतोयस्तुसदुह्याद्दशतोवराम् ।
गोस्वाम्यनुमतेभृत्यःसास्यात्पालेऽभृतेभृतिः ॥२३१॥
नष्टंविनष्टंकृमिभिःश्वहतंविषमेमृतम् ।
हीनम्पुरुषकारेणप्रदद्यात्पालएवतु ॥२३२॥

विघुष्यतुहृतंचौरैर्नपालोदातुमर्हति ।
यदिदेशेचकालेचस्वामिनःस्वस्यशंसति ॥२३३॥
कर्णौचर्म्मचबालांश्चवस्तिंस्नायुंचरोचनाम् ।
पशुषुस्वामिनान्दद्यान्मृतेष्वंगानिदर्शयेत् ॥२३४॥
अजाविकेतुसंरुद्धेवृकैःपालेत्वनायति ।
याम्प्रसह्यवृकोहन्यात्पालेतत्किल्बिषम्भवेत् ॥२३५॥
तासांचेदवरुद्धानांचरन्तीनाम्मिथोवने ।
यामुत्प्लुत्यवृकोहन्यान्नपालस्तत्रकिल्बिषी ॥२३६॥
धनुःशतम्परीहारोग्रामस्यस्यात्समन्ततः ।
शम्यापातास्त्रयोवाऽपित्रिगुणोनगरस्यतु ॥२३७॥
तत्रापरिवृतन्धान्यंविहिंस्युःपशवोयदि ।
नतत्रप्रणयेद्दण्डन्नृपतिःपशुरक्षिणाम् ॥२३८॥
वृतिन्तत्रप्रकुर्वीतयामुष्ट्रोनविलोकयेत् ।
छिद्रंचवारयेत्सर्वंश्वशूकरमुखानुगम् ॥२३९॥
पथिक्षेत्रेपरिवृतेग्रामान्तीयेऽथवापुनः ।
सपालःशतदण्डार्होविपालान्वारयेत्पशून् ॥२४०॥
क्षेत्रेष्वन्येषुतुपशुःसपादम्पणमर्हति ।
सर्वत्रतुसदोदेयःक्षेत्रिकस्येतिधारणा ॥२४१॥

अनिर्दशाहांगांसूतांवृषान्देवपशूंस्तथा ।
सपालान्वाविपालान्वानदण्ड्यान्मनुरब्रवीत् ॥२४२॥
क्षेत्रिकस्यात्ययेदण्डोभागाद्दशगुणोभवेत् ।
ततोऽर्द्धदण्डोभृत्यानामज्ञानात्क्षेत्रिकस्यतु ॥२४३॥
एतद्विधानमातिष्ठेद्धार्मिकःपृथिवीपतिः ।
स्वामिनांचपशूनांचपालानांचव्यतिक्रमे ॥२४४॥
सीमाम्प्रतिसमुत्पन्नेविवादेग्रामयोर्द्वयोः ।
ज्यैष्ठेमासिनयेत्सीमांसुप्रकाशेषुसेतुषु ॥२४५॥
सीमावृक्षांश्चकुर्वीतन्यग्रोधाश्वत्थकिंशुकान् ।
शाल्मलीन्सालतालांश्चक्षीरिणश्चैवपादपान् ॥२४६॥
गुल्मान्वेणूंश्चविविधाञ्छमीवल्लीस्थलानिच ।
शरान्कुब्जकगुल्मांश्चतथासीमाननश्यति ॥२४७॥
तडागान्युदपानानिवाप्यःप्रस्रवणानिच ।
सीमासन्धिषुकार्य्याणिदेवतायतनानिच ॥२४८॥
उपच्छन्नानिचान्यानिसीमालिंगानिकारयेत् ।
सीमाज्ञानेनृणांवीक्ष्यनित्यंलोकेविपर्ययम् ॥२४९॥
अश्मनोऽस्थीनिगोबालांस्तुषान्भस्मकपालिकाः ।
करीषमिष्टकांगाराञ्छर्कराबालुकांस्तथा ॥२५०॥

यानिचैवम्प्रकाराणिकालाद्भूमिर्नभक्षयेत् ।
तानिसन्धिषुसीमायामप्रकाशानिकारयेत् ॥२५१॥
एतैर्लिंगैर्नयेत्सीमांराजाविवदमानयोः ।
पूर्वभुक्त्याचसततमुदकस्यागमेनच ॥२५२॥
यदिसंशयएवस्याल्लिंगानामपिदर्शने ।
साक्षिप्रत्ययएवस्यात्सीमावादविनिर्णयः ॥२५३॥
ग्रामीयककुलानांचसमक्षंसीम्निसाक्षिणः ।
प्रष्टव्याःसीमलिंगानितयोश्चैवविवादिनोः ॥२५४॥
तेपृष्टास्तुयथाब्रूयुःसमस्ताःसीम्निनिश्चयम् ।
निबध्नीयात्तथासीमांसर्वांस्तांश्चैवनामतः ॥२५५॥
शिरोभिस्तेगृहीत्वोर्वीस्त्रग्विणोरक्तवाससः ।
सुकृतैःशापिताःस्वैःस्वैर्नयेयुस्तेसमंजसम् ॥२५६॥
यथोक्तेननयन्तस्तेपूयन्तेसत्यसाक्षिणः ।
विपरीतंनयन्तस्तुदाप्याःस्युर्द्विशतन्दमम् ॥२५७॥
साक्ष्यभावेतुचत्वारोग्रामाःसामन्तवासिनः ।
सीमाविनिर्णयंकुर्युःप्रयताराजसन्निधौ ॥२५८॥
सामन्तानामभावेतुमौलानांसीम्निसाक्षिणाम् ।
इमानप्यनुयुंजीतपुरुषान्वनगोचरान् ॥२५९॥

व्याधाञ्छाकुनिकान्गोपान्कैवर्त्तान्मूलखानकान् ।
व्यालग्राहानुंच्छवृत्तीनन्यांश्चवनचारिणः ॥२६०॥
तेपृष्टास्तुयथाब्रूयुःसीमासन्धिषुलक्षणम् ।
तत्तथास्थापयेद्राजाधर्मेणग्रामयोर्द्वयोः ॥२६१॥
क्षेत्रकूपतडागानामारामस्यगृहस्यच ।
सामन्तप्रत्ययोज्ञेयःसीमासेतुविनिर्णयः ॥२६२॥
सामन्ताश्चेन्मृषाब्रूयुःसेतौविवदतान्नृणाम् ।
सर्वेपृथक्पृथग्दण्ड्याराज्ञामध्यमसाहसम् ॥२६३॥
गृहन्तडागमारामंक्षेत्रंवाभीषयाहरन् ।
शतानिपंचदण्ड्यःस्यादज्ञानाद्विशतोदमः ॥२६४॥
सीमायामविषह्यायांस्वयंराजैवधर्मवित् ।
प्रदिशेद्भूमिमेतेषामुपकारादितिस्थितिः ॥२६५॥
एषोऽखिलेनाभिहितोधर्मःसीमाविनिर्णये ।
अतऊर्द्ध्वम्प्रवक्ष्यामिवाक्पारुष्यविनिर्णयम् ॥२६६॥
शतम्ब्राह्मणमाक्रुश्यक्षत्रियोदण्डमर्हति ।
वैश्योऽप्यर्द्धशतंद्वेवाशूद्रस्तुबधमर्हति ॥२६७॥
पंचाशद्ब्राह्मणोदण्ड्यःक्षत्रियस्याभिशंसने ।
वैश्येस्यादर्द्धपंचाशच्छूद्रेद्वादशकोदमः ॥२६८॥

समवर्णेद्विजातीनान्द्वादशैवव्यतिक्रमे ।
वादेष्ववचनीयेषुतदेवद्विगुणम्भवेत् ॥२६९॥
एकजातिर्द्विजातींस्तुवाचादारुणयाक्षिपन् ।
जिह्वायाःप्राप्नुयाच्छेदंजघन्यप्रभवोहिसः ॥२७०॥
नामजातिग्रहन्त्वेषामभिद्रोहेणकुर्वतः ।
निक्षेप्योऽयोमयःशंकुर्ज्वलन्नास्येदशांगुलः ॥२७१॥
धर्मोपदेशन्दर्पेणविप्राणामस्यकुर्वतः ।
तप्तमासेचयेत्तैलंवक्त्रेश्रोत्रेचपार्थिवः ॥२७२॥
श्रुतन्देशंचजातिंचकर्मशारीरमेवच ।
वितथेनब्रुवन्दर्पाद्दाप्यःस्याद्द्विशतन्दमम् ॥२७३॥
काणंवाऽप्यथवाखंजमन्यंवाऽपितथाविधम् ।
तथ्येनापिब्रुवन्दाप्योदण्डंकार्षापणावरम् ॥२७४॥
मातरम्पितरंजायाम्भ्रातरन्तनयंगुरुम् ।
आक्षारयञ्छतन्दाप्यःपन्थानंचाददद्गुरोः ॥२७५॥
ब्राह्मणक्षत्रियाभ्यान्तुदण्डःकार्योविजानता ।
ब्राह्मणेसाहसःपूर्वःक्षत्रियेत्वेवमध्यमः ॥२७६॥
विट्शूद्रयोरेवमेवस्वजातिम्प्रतितत्त्वतः ।
छेदवर्जम्प्रणयनन्दण्डस्येतिविनिश्चयः ॥२७७॥

एषदण्डविधिःप्रोक्तोवाक्पारुष्यस्यतत्त्वतः ।
अतऊर्द्ध्वम्प्रवक्ष्यामिदण्डपारुष्यनिर्णयम् ॥२७८॥
येनकेनचिदंगेनहिंस्याच्चेच्छ्रेष्ठमन्त्यजः ।
छेत्तव्यन्तत्तदेवास्यतन्मनोरनुशासनम् ॥२७९॥
पाणिमुद्यम्यदण्डंवापाणिच्छेदनमर्हति ।
पादेनप्रहरन्कोपात्पादच्छेदनमर्हति ॥२८०॥
सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः ।
कट्यांकृतांकोनिर्वास्यःस्फिचंवाऽस्यावकर्त्तयेत् ॥२८१॥
अवनिष्ठीवतोदर्पाद्द्वावोष्ठौछेदयेन्नृपः ।
अवमूत्रयतोमेढ्रमवशर्द्धयतोगुदम् ॥२८२॥
केशेषुगृह्णतोहस्तौछेदयेदविचारयन् ।
पादयोर्द्दाढिकायांचग्रीवायांवृषणेषुच ॥२८३॥
त्वग्भेदकःशतन्दण्ड्योलोहितस्यचदर्शकः ।
मांसभेत्तातुषण्णिष्कान्प्रवास्यस्त्वस्थिभेदकः ॥२८४॥
वनस्पतीनांसर्वेषामुपभोगोयथायथा ।
तथातथादमःकार्य्योहिंसायामितिधारणा ॥२८५॥
मनुष्याणाम्पशूनांचदुःखायप्रहृतेसति ।
यथायथामहद्दुःखन्दण्डंकुर्य्यात्तथातथा ॥२८६॥

अंगावपीडनायांचव्रणशोणितयोस्तथा ।
समुत्थानव्ययन्दाप्यःसर्वदण्डमथापिवा ॥२८७॥
द्रव्याणिहिंस्याद्योयस्यज्ञानतोऽज्ञानतोऽपिवा ।
सतस्योत्पादयेत्तुष्टिंराज्ञोदद्याच्चतत्समम् ॥२८८॥
चर्मचार्मिकभाण्डेषुकाष्ठलोष्टमयेषुच ।
मूल्यात्पंचगुणोदण्डःपुष्पमूलफलेषुच ॥२८९॥
यानस्यचैवयातुश्चयानस्वामिनएवच ।
दशातिवर्तनान्याहुःशेषेदण्डोविधीयते ॥२९०॥
छिन्ननास्येभग्नयुगेतिर्यक्प्रतिमुखागते ।
अक्षभंगेचयानस्यचक्रभंगेतथैवच ॥२९१॥
छेदनेचैवयंत्राणांयोक्त्ररश्म्योस्तथैवच ।
आक्रन्देचाप्यपैहीतिनदण्डम्मनुरब्रवीत् ॥२९२॥
यत्रापवर्ततेयुग्मंवैगुण्यात्प्राजकस्यतु ।
तत्रस्वामीभवेद्दण्ड्योहिंसायान्द्विशतन्दमम् ॥२९३॥
प्राजकश्चेद्भवेदाप्तःप्राजकोदण्डमर्हति ।
युग्यस्थाःप्राजकेऽनाप्तेसर्वेदण्ड्याःशतंशतम् ॥२९४॥
सचेत्तुपथिसंरुद्धःपशुभिर्वारथेनवा ।
प्रमापयेत्प्राणभृतस्तत्रदण्डोऽविचारितः ॥२९५॥

मनुष्यमारणेक्षिप्रंचौरवत्किल्विषम्भवेत् ।
प्राणभृत्सुमहत्स्वर्द्धंगोगजोष्ट्रहयादिषु ॥२९६॥
क्षुद्रकाणाम्पशूनान्तुहिंसायान्द्विशतोदमः ।
पंचाशत्तुभवेद्दण्डःशुभेषुमृगपक्षिषु ॥२९७॥
गर्दभाजाविकानान्तुदण्डःस्यात्पंचमाषिकः ।
माषकस्तुभवेद्दण्डःश्वशूकरनिपातने ॥२९८॥
भार्य्यापुत्रश्चदासश्चशिष्योभ्रातावसोदरः ।
प्राप्तापराधास्ताड्याःस्यूरज्ज्वावेणुदलेनवा ॥२९९॥
पृष्ठतस्तुशरीरस्यनोत्तमांगेकथंचन ।
अतोऽन्यथातुप्रहरन्प्राप्तःस्याच्चौरकिल्विषम् ॥३००॥
एषोऽखिलेनाभिहितोदण्डपारुष्यनिर्णयः ।
स्तेनस्यातःप्रवक्ष्यामिविधिन्दण्डविनिर्णये ॥३०१॥
परमंयत्नमातिष्ठेत्स्तेनानान्निग्रहेनृपः ।
स्तेनानान्निग्रहादस्ययशोराष्ट्रंचवर्द्धते ॥३०२॥
अभयस्यहियोदातासपूज्यःसततन्नृपः ।
सत्रंहिवर्द्धतेतस्यसदैवाभयदक्षिणम् ॥३०३॥
सर्वतोधर्मषड्भागोराज्ञोभवतिरक्षतः ।
अधर्मादपिषड्भागोभवत्यस्यह्यरक्षतः ॥३०४॥

यदधीतेयद्यजतेयद्ददातियदर्चति ।
तस्यषड्भागभाग्राजासम्यग्भवतिरक्षणात् ॥३०५॥
रक्षन्धर्मेणभूतानिराजावध्यांश्चघातयन् ।
यजतेऽहरहर्यज्ञैःसहस्रशतदक्षिणैः ॥३०६॥
योऽरक्षन्बलिमादत्तेकरंशुल्कंचपार्थिवः ।
प्रतिभागंचदण्डंचससद्योनरकंव्रजेत् ॥३०७॥
अरक्षितारंराजानम्बलिषड्भागहारिणम् ।
तमाहुःसर्वलोकस्यसमग्रमलहारकम् ॥३०८॥
अनपेक्षितमर्य्यादंनास्तिकंविप्रलुम्पकम् ।
अरक्षितारमत्तारंनृपंविद्यादधोगतिम् ॥३०९॥
अधार्म्मिकंत्रिभिर्न्यायैर्निगृह्णीयात्प्रयत्नतः ।
निरोधनेनबन्धेनविविधेनवधेनच ॥३१०॥
निग्रहेणहिपापानांसाधूनांसंग्रहेणच ।
द्विजातयइवेज्याभिःपूयन्तेसततंनृपाः ॥३११॥
क्षन्तव्यम्प्रभुणानित्यंक्षिपतांकार्य्यिणान्नृणाम् ।
बालवृद्धातुराणांचकुर्वताहितमात्मनः ॥३१२॥
यःक्षिप्तोमर्षयत्यार्त्तैस्तेनस्वर्गेमहीयते ।
यस्त्वैश्वर्य्यान्नक्षमतेनरकन्तेनगच्छति ॥३१३॥

राजास्तेनेनगन्तथोमुक्तकेशेनधावता ।
आचक्षाणेनतत्स्तेयमेवंकर्म्मास्मिशाधिमाम् ॥३१४॥
स्कन्धेनादायमुसलंलगुडंवाऽपिखादिरम् ।
शक्तिंचोभयतस्तीक्ष्णामायसन्दण्डमेववा ॥३१५॥
शासनाद्वाविमोक्षाद्वास्तेनःस्तेयाद्विमुच्यते ।
अशासित्वातुतंराजास्तेनस्याप्नोतिकिल्विषम् ॥३१६॥
अन्नादेभ्रूणहामार्ष्टिपत्यौभार्य्याऽपचारिणी ।
गुरौशिष्यश्चयाज्यश्चस्तेनोराजनिकिल्विषम् ॥३१७॥
राजनिर्धूतदण्डास्तुकृत्वापापानिमानवाः ।
निर्मलाःस्वर्गमायान्तिसन्तःसुकृतिनोयथा ॥३१८॥
यस्तुरज्जुंघटंकूपाद्धरेद्भिन्द्याच्चयःप्रपाम् ।
सदण्डम्प्राप्नुयान्माषन्तच्चतस्मिन्समाहरेत् ॥३१९॥
धान्यन्दशभ्यःकुम्भेभ्योहरतोऽभ्यधिकम्बधः ।
शेषेऽप्येकादशगुणन्दाप्यस्तस्यचतद्धनम् ॥३२०॥
तथाधरिममेयानांशतादभ्यधिकेबधः ।
सुवर्णरजतादीनामुत्तमानांचवाससाम् ॥३२१॥
पंचाशतस्त्वभ्यधिकेहस्तच्छेदनमिष्यते ।
शेषेत्वेकादशगुणम्मूल्याद्दण्डम्प्रकल्पयेत् ॥३२२॥

पुरुषाणांकुलीनानान्नारीणांचविशेषतः ।
मुख्यानांचैवरत्नानांहरणेबधमर्हति ॥३२३॥
महापशूनांहरणेशस्त्राणामौषधस्यच ।
कालमासाद्यकार्य्यंचदण्डंराजाप्रकल्पयेत् ॥३२४॥
गोषुब्राह्मणसंस्थासुक्षुरिकायाश्चभेदने ।
पशूनांहरणेचैवसद्यःकार्य्योऽर्द्धपादिकः ॥३२५॥
सूत्रकार्पासकिण्वानांगोमयस्यगुडस्यच ।
दध्नःक्षीरस्यतक्रस्यपानीयस्यतृणस्यच ॥३२६॥
वेणुवैदलभाण्डानांलवणानान्तथैवच ।
मृन्मयानांचहरणेमृदोभस्मनएवच ॥३२७॥
मत्स्यानाम्पक्षिणांचैवतैलस्यचघृतस्यच ।
मांसस्यमधुनश्चैवयच्चान्यत्पशुसम्भवम् ॥३२८॥
अन्येषांचैवमादीनाम्मद्यानामोदनस्यच ।
पक्वान्नानांचसर्वेषान्तन्मूल्याद्द्विगुणोदमः ॥३२९॥
पुष्पेषुहरितेधान्येगुल्मवल्लीनगेषुच ।
अन्येष्वपरिपूतेषुदण्डःस्यात्पंचकृष्णलः ॥३३०॥
परिपूतेषुधान्येषुशाकमूलफलेषुच ।
निरन्वयेशतन्दण्डःसान्वयेऽर्द्धशतन्दमः ॥३३१॥

स्यात्साहसन्त्वन्वयवत्प्रसभंकर्मयत्कृतम् । 
निरन्वयम्भवेत्स्तेयंहृत्वाऽपव्ययतेचयत् ॥३३२॥
यस्त्वेतान्युपक्लृप्तानिद्रव्याणिस्तेनयेन्नरः । 
तमाद्यन्दण्डयेद्राजायश्चाग्निंचोरयेद्गृहात् ॥३३३॥
येनयेनयथाऽङ्गेनस्तेनोनृषुविचेष्टते । 
तत्तदेवहरेत्तस्यप्रत्यादेशायपार्थिवः ॥३३४॥
पिताचार्यःसुहृन्माताभार्य्यापुत्रःपुरोहितः । 
नादण्ड्योनामराज्ञोऽस्तियःस्वधर्मेनतिष्ठति ॥३३५॥
कार्षापणम्भवेद्दण्ड्योयत्रान्यःप्राकृतोजनः । 
तत्रराजाभवेद्दण्ड्यःसहस्रमितिधारणा ॥३३६॥
अष्टापाद्यन्तुशूद्रस्यस्तेयेभवतिकिल्विषम् । 
षोडशैवतुवैश्यस्यद्वात्रिंशत्क्षत्रियस्यच ॥३३७॥
ब्राह्मणस्यचतुःषष्टिःपूर्णंवाऽपिशतम्भवेत् । 
द्विगुणावाचतुःषष्टिस्तद्दोषगुणविद्धिसः ॥३३८॥
वानस्पत्यम्मूलफलन्दार्वग्न्यर्थन्तथैवच । 
तृणंचगोभ्योग्रासार्थमस्तेयम्मनुरब्रवीत् ॥३३९॥
योऽदत्तादायिनोहस्ताल्लिप्सेतब्राह्मणोधनम् । 
याजनाध्यापनेनापियथास्तेनस्तथैवसः ॥३४०॥

द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षूद्वेचमूलके ।
आददानः परक्षेत्रान्नदण्डन्दातुमर्हति ॥३४१॥
असन्धितानांसन्ध्यातासन्धितानांचमोक्षकः ।
दासाश्वरथहर्त्ताचप्राप्तःस्याच्चौरकिल्विषम् ॥३४२॥
अनेनविधिनाराजाकुर्वाणःस्तेननिग्रहम् ।
यशोऽस्मिन्प्राप्नुयाल्लोकेप्रेत्यचानुत्तमंसुखम् ॥३४३॥
ऐन्द्रंस्थानमभिप्रेप्सुर्यशश्चाक्षयमव्ययम् ।
नोपेक्षेतक्षणमपिराजासाहसिकन्नरम् ॥३४४॥
वाग्दुष्टात्तस्कराच्चैवदण्डेनैवचहिंसतः ।
साहसस्यनरःकर्त्ताविज्ञेयःपापकृत्तमः ॥३४५॥
साहसेवर्त्तमानन्तुयोमर्षयतिपार्थिवः ।
सविनाशंव्रजत्याशुविद्वेषंचाधिगच्छति ॥३४६॥
नमित्रकारणाद्राजाविपुलाद्वाधनागमात् ।
समुत्सृजेत्साहसिकान्सर्वभूतभयावहान् ॥३४७॥
शस्त्रन्द्विजातिभिर्ग्राह्यन्धर्मोयत्रोपरुध्यते ।
द्विजातीनांचवर्णानांविप्लवेकालकारिते ॥३४८॥
आत्मनश्चपरित्राणेदक्षिणानांचसंगरे ।
स्त्रीविप्राभ्युपपत्तौचघ्नन्धर्मेणनदुष्यति ॥३४९॥

गुरुंवाबालवृद्धौवाब्राह्मणंवाबहुश्रुतम् ।
आततायिनमायान्तंहन्यादेवाविचारयन् ॥३५०॥
नाततायिवधेदोषोहन्तुर्भवतिकश्चन ।
प्रकाशंवाऽप्रकाशंवामन्युस्तन्मन्युमृच्छति ॥३५१॥
परदाराभिमर्षेषुप्रवृत्तान्नॄन्महीपतिः ।
उद्वेजनकरैर्दण्डैश्चिह्नयित्वाप्रवासयेत् ॥३५२॥
तत्समुत्थोहिलोकस्यजायतेवर्णसंकरः ।
येनमूलहरोऽधर्मःसर्वनाशायकल्पते ॥३५३॥
परस्यपत्न्यापुरुषःसम्भाषांयोजयन्रहः ।
पूर्वमाक्षारितोदोषैःप्राप्नुयात्पूर्वसाहसम् ॥३५४॥
यस्त्वनाक्षारितःपूर्वमभिभाषेतकारणात् ।
नदोषम्प्राप्नुयात्किंचिन्नहितस्यव्यतिक्रमः ॥३५५॥
परस्त्रियंयोऽभिवदेत्तीर्थेऽरण्येवनेऽपिवा ।
नदीनांवाऽपिसम्भेदेससंग्रहणमाप्नुयात् ॥३५६॥
उपचारक्रियाकेलिःस्पर्शोभूषणवाससाम् ।
सहखट्वासनंचैवसर्वंसंग्रहणंस्मृतम् ॥३५७॥
स्त्रियंस्पृशेददेशेयःस्पृष्टोवामर्षयेत्तया ।
परस्परस्यानुमतेसर्वंसंग्रहणंस्मृतं ॥३५८॥

अब्राह्मणःसंग्रहणेप्राणान्तन्दण्डमर्हति ।
चतुर्णामपिवर्णानान्दारारक्ष्यतमाःसदा ॥३५९॥
भिक्षुकावन्दिनश्चैवदीक्षिताःकारवस्तथा ।
सम्भाषणंसहस्त्रीभिःकुर्य्युरप्रतिवारिताः ॥३६०॥
नसम्भाषाम्परस्त्रीभिःप्रतिषिद्धःसमाचरेत् ।
निषिद्धोभाषमाणस्तुसुवर्णन्दण्डमर्हति ॥३६१॥
नैषचारणदारेषुविधिर्नात्मोपजीविषु ।
सज्जयन्तिहितेनारीर्निगूढाश्चारयन्तिच ॥३६२॥
किंचिदेवतुदाप्यःस्यात्सम्भाषान्ताभिराचरन् ।
प्रैष्यासुचैकभक्तासुरहःप्रव्रजितासुच ॥३६३॥
योऽकामान्दूषयेत्कन्यांससद्योबधमर्हति ।
सकामान्दूषयंस्तुल्योनबधम्प्राप्नुयान्नरः ॥३६४॥
कन्याम्भजन्तीमुत्कृष्टन्नकिंचिदपिदापयेत् ।
जघन्यंसेवमानान्तुसंयतांवासयेद्गृहे ॥३६५॥
उत्तमांसेवमानस्तुजघन्योबधमर्हति ।
शुल्कन्दद्यात्सेवमानःसमामिच्छेत्पितायदि ॥३६६॥
अभिषह्यतुयःकन्यांकुर्य्याद्दर्पेणमानवः ।
तस्याशुकर्त्येअंगुल्यौदण्डंचार्हतिषट्शतम् ॥३६७॥

सकामान्दूषयंस्तुल्योनांगुलिच्छेदमाप्नुयात् ।
द्विशतन्तुदमन्दाप्यःप्रसंगविनिवृत्तये ॥३६८॥
कन्यैवकन्यांयाकुर्य्यात्तस्याःस्याद्द्विशतोदमः ।
शुल्कंचद्विगुणन्दद्याच्छिफाश्चैवाप्नुयाद्दश ॥३६९॥
यातुकन्याम्प्रकुर्यात्स्त्रीसासद्योमौण्ड्यमर्हति ।
अंगुल्योरेववाच्छेदंखरेणोद्वहनन्तथा ॥३७०॥
भर्त्तारंलंघयेद्यातुस्त्रीज्ञातिगुणदर्पिता ।
तांश्वभिःखादयेद्राजासंस्थानेबहुसंस्थिते ॥३७१॥
पुमांसन्दाहयेत्पापंशयनेतप्तआयसे ।
अभ्यादध्युश्चकाष्ठानितत्रदह्येतपापकृत् ॥३७२॥
संवत्सराभिशस्तस्यदुष्टस्यद्विगुणोदमः ।
व्रात्ययासहसंवासेचाण्डाल्यातावदेवतु ॥३७३॥
शूद्रोगुप्तमगुप्तंवाद्वैजातंवर्णमावसन् ।
अगुप्तमंगसर्वस्वैर्गुप्तंसर्वेणहीयते ॥३७४॥
वैश्यःसर्वस्वदण्डःस्यात्संवत्सरनिरोधतः ।
सहस्रंक्षत्रियोदण्ड्योमौण्ड्यंमूत्रेणचार्हति ॥३७५॥
ब्राह्मणींयद्यगुप्तान्तुगच्छेतांवैश्यपार्थिवौ ।
वैश्यम्पंचशतंकुर्य्यात्क्षत्रियन्तुसहस्रिणम् ॥३७६॥

उभावपितुतावेवब्राह्मण्यागुप्तयासह ।
विप्लुतौशूद्रवद्दण्ड्यौदग्धव्यौवाकटाग्निना ॥३७७॥
सहस्रम्ब्राह्मणोदण्ड्योगुप्तांविप्राम्बलाद्व्रजन् ।
शतानिपंचदण्ड्यःस्यादिच्छन्त्यासहसंगतः ॥३७८॥
मौण्ड्यम्प्राणान्तिकोदण्डोब्राह्मणस्यविधीयते ।
इतरेषान्तुवर्णानान्दण्डःप्राणान्तिकोभवेत् ॥३७९॥
नजातुब्राह्मणंहन्यात्सर्वपापेष्वपिस्थितम् ।
राष्ट्रादेनंवहिःकुर्य्यात्समग्रधनमक्षतम् ॥३८०॥
नब्राह्मणबधाद्भूयानधर्मोविद्यतेभुवि ।
तस्मादस्यबधंराजामनसाऽपिनचिन्तयेत् ॥३८१॥
वैश्यश्चेत्क्षत्रियांगुप्तांवैश्यांवाक्षत्रियोव्रजेत ।
योब्राह्मण्यामगुप्तायान्तावुभौदण्डमर्हतः ॥३८२॥
सहस्रम्ब्राह्मणोदण्डन्दाप्योगुप्तेतुतेव्रजन् ।
शूद्रायांक्षत्रियविशोःसाहस्रोवैभवेद्दमः ॥३८३॥
क्षत्रियायामगुप्तायांवैश्येपंचशतन्दमः ।
मूत्रेणमौण्ड्यमिच्छेत्तुक्षत्रियोदण्डमेववा ॥३८४॥
अगुप्तेक्षत्रियावैश्येशूद्रांवाब्राह्मणोव्रजन् ।
शतानिपंचदण्ड्यःस्यात्सहस्रन्त्वन्त्यजस्त्रियम ॥३८५॥

यस्यस्तेनःपुरेनास्तिनान्यस्त्रीगोनदुष्टवाक् ।
नसाहसिकदण्डघ्नौसराजाशक्रलोकभाक् ॥३८६॥
एतेषान्निग्रहोराज्ञःपंचानांविषयेस्वके ।
साम्राज्यकृत्सजात्येषुलोकेचैवयशस्करः ॥३८७॥
ऋत्विजंयस्त्यजेद्याज्योयाज्यंचर्त्विक्त्यजेद्यदि ।
शक्तंकर्मण्यदुष्टंचतयोर्दण्डःशतंशतम् ॥३८८॥
नमातानपितानस्त्रीनपुत्रस्त्यागमर्हति ।
त्यजन्नपतितानेतान्राज्ञादण्ड्यःशतानिषट् ॥३८९॥
आश्रमेषुद्विजातीनांकार्य्येविवदतांमिथः ।
नविब्रूयान्नृपोधर्मंचिकीर्षन्हितमात्मनः ॥३९०॥
यथार्हमेतानभ्यर्च्यब्राह्मणैःसहपार्थिवः ।
सान्त्वेनप्रशमय्यादौस्वधर्मम्प्रतिपादयेत् ॥३९१॥
प्रातिवेश्यानुवेश्यौचकल्याणेविंशतिद्विजे ।
अर्हावभोजयन्विप्रोदण्डमर्हतिमाषकम् ॥३९२॥
श्रोत्रियःश्रोत्रियंसाधुम्भूतिकृत्येष्वभोजयन् ।
तदन्नन्द्विगुणन्दाप्योहिरण्यंचैवमाषकम् ॥३९३॥
अन्धोजडःपीठसर्पीसप्तत्यास्थविरश्चयः ।
श्रोत्रियेषूपकुर्वंश्चनदाप्याःकेनचित्करम् ॥३९४॥

श्रोत्रियंव्याधितार्त्तौचबालवृद्धावकिंचनम् ।
महाकुलीनमार्य्यंचराजासम्पूजयेत्सदा ॥३९५॥
शाल्मलीफलकेश्लक्ष्णेनेनिज्यान्नेजकःशनैः ।
नचवासांसिवासोभिर्निर्हरेन्नचवासयेत् ॥३९६॥
तन्तुवायोदशपलन्दद्यादेकपलाधिकम् ।
अतोऽन्यथावर्त्तमानोदाप्योद्वादशकन्दमम् ॥३९७॥
शुल्कस्थानेषुकुशलाःसर्वपण्यविचक्षणाः ।
कुर्य्युरर्घंयथापण्यन्ततोविंशंनृपोहरेत् ॥३९८॥
राज्ञःप्रख्यातभाण्डानिप्रतिषिद्धानियानिच ।
तानिनिर्हरतोलोभात्सर्वहारंहरेन्नृपः ॥३९९॥
शुल्कस्थानम्परिहरन्नकालेक्रयविक्रयी ।
मिथ्यावादीचसंख्यानेदाप्योऽष्टगुणमत्ययम् ॥४००॥
आगमंनिर्गमंस्थानन्तथावृद्धिक्षयावुभौ ।
विचार्य्यसर्वपण्यानांकारयेत्क्रयविक्रयौ ॥४०१॥
पंचरात्रेपंचरात्रेपक्षेपक्षेऽथवागते ।
कुर्वीतचैषाम्प्रत्यक्षमर्घसंस्थापनन्नृपः ॥४०२॥
तुलामानम्प्रतीमानंसर्वंचस्यात्सुलक्षितम् ।
षट्सुषट्सुचमासेषुपुनरेवपरीक्षयेत् ॥४०३॥

पणंयानन्तरेदाप्यम्पौरुषोऽर्द्धपणन्तरे ।
पादम्पशुश्चयोषिच्चपादार्द्धंरिक्तकःपुमान् ॥४०४॥
भाण्डपूर्णानियानानितार्य्यन्दाप्यानिसारतः ।
रिक्तभाण्डानियत्किंचित्पुमांसश्चापरिच्छदाः ॥४०५॥
दीर्घाध्वनियथादेशंयथाकालन्तरोभवेत् ।
नदीतीरेषुतद्विद्यात्समुद्रेनास्तिलक्षणम् ॥४०६॥
गर्भिणीतुद्विमासादिस्तथाप्रव्रजितोमुनिः ।
ब्राह्मणालिंगिनश्चैवनदाप्यास्तारिकन्तरे ॥४०७॥
यन्नाविकिंचिद्दासानांविशीर्य्येतापराधतः ।
तद्दासैरेवदातव्यंसमागम्यस्वतोंऽशतः ॥४०८॥
एषनौयायिनामुक्तोव्यवहारस्यनिर्णयः ।
दाशापराधतस्तोयेदैविकेनास्तिनिग्रहः ॥४०९॥
वाणिज्यंकारयेद्वैश्यंकुशीदंकृषिमेवच ।
पशूनांरक्षणंचैवदास्यंशूद्रंद्विजन्मनाम् ॥४१०॥
क्षत्रियंचैववैश्यंचब्राह्मणोवृत्तिकर्षितौ ।
बिभृयादानृशंस्येनस्वानिकर्माणिकारयन् ॥४११॥
दास्यन्तुकारयँल्लोभाद्ब्राह्मणःसंस्कृतान्द्विजान् ।
अनिच्छतःप्राभवत्याद्राज्ञादण्ड्यःशतानिषट् ॥४१२॥

3 H

शूद्रन्तुकारयेद्दास्यंक्रीतमक्रीतमेववा ।
दास्यायैवहिसृष्टोऽसौब्राह्मणस्यस्वयम्भुवा ॥४१३॥
नस्वामिनानिसृष्टोऽपिशूद्रोदास्याद्विमुच्यते ।
निसर्गजंहितत्तस्यकस्तस्मात्तदपोहति ॥४१४॥
ध्वजाहृतोभक्तदासोगृहजःक्रीतदत्त्रिमौ ।
पैत्रिकोदण्डदासश्चसप्तैतेदासयोनयः ॥४१५॥
भार्यापुत्रश्चदासश्चत्रयएवाधनाःस्मृताः ।
यत्तेसमधिगच्छन्तियस्यतेतस्यतद्धनम् ॥४१६॥
विस्रब्धम्ब्राह्मणःशूद्राद्द्रव्योपादानमाचरेत् ।
नहितस्यास्तिकिंचित्स्वंभर्तृहार्य्यधनोहिसः ॥४१७॥
वैश्यशूद्रौप्रयत्नेनस्वानिकर्माणिकारयेत् ।
तौहिच्युतौस्वकर्मभ्यःक्षोभयेतामिदंजगत् ॥४१८॥
अहन्यहन्यवेक्षेतकर्मान्तान्वाहनानिच ।
आयव्ययौचनियतावाकरान्कोषमेवच ॥४१९॥
एवंसर्वानिमान्राजाव्यवहारान्समापयन् ।
व्यपोह्यकिल्विषंसर्वम्प्राप्नोतिपरमांगतिम् ॥४२०॥

---

॥ इतिमानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायाम् ॥

॥ अष्टमोऽध्यायः ॥

॥ मानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायांनवमोऽध्यायः ॥

---

पुरुषस्यस्त्रियाश्चैवधर्म्येवर्त्मनितिष्ठतोः ।
संयोगेविप्रयोगेचधर्मान्वक्ष्यामिशाश्वतान् ॥१॥
अस्वतंत्राःस्त्रियःकार्याःपुरुषैःस्वैर्दिवानिशम् ।
विषयेषुचसज्जन्त्यःसंस्थाप्याआत्मनोवशे ॥२॥
पितारक्षतिकौमारेभर्त्तारक्षतियौवने ।
रक्षन्तिस्थाविरेपुत्रानस्त्रीस्वातंत्र्यमर्हति ॥३॥
कालेऽदातापितावाच्योवाच्यश्चानुपयन्पतिः ।
मृतेभर्त्तरिपुत्रस्तुवाच्योमातुररक्षिता ॥४॥
सूक्ष्मेभ्योऽपिप्रसंगेभ्यःस्त्रियोरक्ष्याविशेषतः ।
द्वयोर्हिकुलयोःशोकमावहेयुररक्षिताः ॥५॥
इमंहिसर्ववर्णानाम्पश्यन्तोधर्म्ममुत्तमम् ।
यतन्तेरक्षितुम्भार्य्याम्भर्त्तारोदुर्बलाअपि ॥६॥
स्वाम्प्रसूतिंचरित्रंचकुलमात्मानमेवच ।
स्वंचधर्म्मम्प्रयत्नेनजायांरक्षन्हिरक्षति ॥७॥

पतिर्भार्य्यांसम्प्रविश्यगर्भोभूत्वेहजायते ।
जायायास्तद्धिजायात्वंयदस्यांजायतेपुनः ॥८॥
यादृशम्भजतेहिस्त्रीसुतंसूतेतथाविधम् ।
तस्मात्प्रजाविशुद्ध्यर्थंस्त्रियंरक्षेत्प्रयत्नतः ॥९॥
नकश्चिद्योषितःशक्तःप्रसह्यपरिरक्षितुम् ।
एतैरुपाययोगैस्तुशक्यास्ताःपरिरक्षितुम् ॥१०॥
अर्थस्यसंग्रहेचैनांव्ययेचैवनियोजयेत् ।
शौचेधर्मेऽन्नपक्त्यांचपारिणाह्यस्यचेक्षणे ॥११॥
अरक्षितागृहेरुद्धाःपुरुषैराप्तकारिभिः ।
आत्मानमात्मनायास्तुरक्षेयुस्ताःसुरक्षिताः ॥१२॥
पानन्दुर्ज्जनसंसर्गःपत्याचविरहोऽटनम् ।
स्वप्नोऽन्यगेहवासश्चनारीसन्दूषणानिषट् ॥१३॥
नैतारूपम्परीक्षन्तेनासांवयसिसंस्थितिः ।
सुरूपंवाविरूपंवापुमानित्येवभुंजते ॥१४॥
पौंश्चल्याच्चलचित्ताच्चनैस्नेह्याच्चस्वभावतः ।
रक्षितायत्नतोऽपीहभर्तृष्वेताविकुर्वते ॥१५॥
एवंस्वभावंज्ञात्वासाम्प्रजापतिनिसर्गजम् ।
परमंयत्नमातिष्ठेत्पुरुषोरक्षणम्प्रति ॥१६॥

शय्यासनमलंकारंकामंक्रोधमनार्जवम् ।
द्रोहभावंकुचर्यांचस्त्रीभ्योमनुरकल्पयत् ॥१७॥
नास्तिस्त्रीणांक्रियामंत्रैरितिधर्मेव्यवस्थितः ।
निरिन्द्रियाह्यमंत्राश्चस्त्रियोऽनृतमितिस्थितिः ॥१८॥
तथाचश्रुतयोबह्व्योनिगीतानिगमेष्वपि ।
स्वालक्षण्यपरीक्षार्थन्तासांशृणुतनिष्कृतीः ॥१९॥
यन्मेमाताप्रलुलुभेविचरन्त्यऽपतिव्रता ।
तन्मेरेतःपितावृङ्क्तामित्यस्यैतन्निदर्शनम् ॥२०॥
ध्यायत्यनिष्टंयत्किंचित्पाणिग्राहस्यचेतसा ।
तस्यैषव्यभिचारस्यनिह्नवःसम्यगुच्यते ॥२१॥
यादृग्गुणेनभर्त्रास्त्रीसंयुज्येतयथाविधि ।
तादृग्गुणासाभवतिसमुद्रेणेवनिम्नगा ॥२२॥
अक्षमालावशिष्ठेनसंयुक्ताऽधमयोनिजा ।
शारंगीमन्दपालेनजगामाभ्यर्हणीयताम् ॥२३॥
एताश्चान्याश्चलोकेऽस्मिन्नपकृष्टप्रसूतयः ।
उत्कर्षंयोषितःप्राप्ताःस्वैःस्वैर्भर्तृगुणैःशुभैः ॥२४॥
एषोदितालोकयात्रानित्यंस्त्रीपुंसयोःशुभा ।
प्रेत्येहचसुखोदर्कान्प्रजाधर्मान्निबोधत ॥२५॥

प्रजनार्थम्महाभागाःपूजार्हागृहदीप्तयः ।
स्त्रियःश्रियश्चगेहेषुनविशेषोऽस्तिकश्चन ॥२६॥
उत्पादनमपत्यस्यजातस्यपरिपालनम् ।
प्रत्यहंलोकयात्रायाःप्रत्यक्षंस्त्रीनिबन्धनम् ॥२७॥
अपत्यन्धर्मकार्याणिशुश्रूषारतिरुत्तमा ।
दाराधीनस्तथास्वर्गःपितॄणामात्मनश्चह ॥२८॥
पतिंयानाभिचरतिमनोवाग्देहसंयता ।
साभर्तृलोकानाप्नोतिसद्भिःसाध्वीतिचोच्यते ॥२९॥
व्यभिचारात्तुभर्तुःस्त्रीलोकेप्राप्नोतिनिन्द्यताम् ।
शृगालयोनिंचाप्नोतिपापरोगैश्चपीड्यते ॥३०॥
पुत्रम्प्रत्युदितंसद्भिःपूर्वजैश्चमहर्षिभिः ।
विश्वजन्यमिमम्पुण्यमुपन्यासन्निबोधत ॥३१॥
भर्तुःपुत्रंविजानन्तिश्रुतिद्वैधन्तुभर्तरि ।
आहुरुत्पादकंकेचिदपरेक्षेत्रिणंविदुः ॥३२॥
क्षेत्रभूतास्मृतानारीवीजभूतःस्मृतःपुमान् ।
क्षेत्रवीजसमायोगात्सम्भवःसर्वदेहिनाम् ॥३३॥
विशिष्टंकुत्रचिद्वीजंस्त्रीयोनिस्त्वेवकुत्रचित् ।
उभयन्तुसमंयत्रसाप्रसूतिःप्रशस्यते ॥३४॥

वीजस्यचैवयोन्याश्चवीजमुत्कृष्टमुच्यते ।
सर्वभूतप्रसूतिर्हिवीजलक्षणलक्षिता ॥३५॥
यादृशन्तूप्यतेवीजंक्षेत्रेकालोपपादिते ।
तादृग्रोहतितत्तस्मिन्वीजंस्वैर्व्यंजितंगुणैः ॥३६॥
इयम्भूमिर्हिभूतानांशाश्वतीयोनिरुच्यते ।
नचयोनिगुणान्कांश्चिद्वीजम्पुष्पतिपुष्टिषु ॥३७॥
भूमावप्येककेदारेकालोप्तानिकृषीबलैः ।
नानारूपाणिजायन्तेवीजानीहस्वभावतः ॥३८॥
व्रीहयःशालयोमुद्गास्तिलामाषास्तथायवाः ।
यथावीजम्प्ररोहन्तिलशुनानीक्षवस्तथा ॥३९॥
अन्यदुप्तंजातमन्यदित्येतन्नोपपद्यते ।
उप्यतेयद्धियद्वीजन्तत्तदेवप्ररोहति ॥४०॥
तत्प्राज्ञेनविनीतेनज्ञानविज्ञानवेदिना ।
आयुष्कामेनवप्तव्यन्नजातुपरयोषिति ॥४१॥
अत्रगाथावायुगीताःकीर्त्तयन्तिपुराविदः ।
यथावीजन्नवप्तव्यम्पुंसापरपरिग्रहे ॥४२॥
नश्यतीषुर्यथाविद्धःखेविद्धमनुविध्यतः ।
तथानश्यतिवैक्षिप्रंवीजम्परपरिग्रहे ॥४३॥

पृथोरपीमाम्पृथिवीम्भार्य्याम्पूर्वविदोविदुः ।
स्थाणुच्छेदस्यकेदारमाहुःशल्यवतोमृगम् ॥४४॥
एतावानेवपुरुषोयज्जायात्माप्रजेतिह ।
विप्राःप्राहुस्तथाचैतद्योभर्त्तासास्मृताङ्गना ॥४५॥
ननिष्क्रयविसर्गाभ्याम्भर्त्तुर्भार्य्याविमुच्यते ।
एवंधर्म्मंविजानीमःप्राक्प्रजापतिनिर्मितम् ॥४६॥
सकृदंशोनिपततिसकृत्कन्याप्रदीयते ।
सकृदाहददानीतित्रीण्येतानिसतांसकृत् ॥४७॥
यथागोऽश्वोष्ट्रदासीषुमहिष्यजाविकासुच ।
नोत्पादकःप्रजाभागीतथैवान्यांगनास्वपि ॥४८॥
येऽक्षेत्रिणोवीजवन्तःपरक्षेत्रप्रवापिणः ।
तेवैसस्यस्यजातस्यनलभन्तेफलंक्वचित् ॥४९॥
यदन्यगोषुवृषभोवत्सानांजनयेच्छतम् ।
गोमिनामेवतेवत्सामोघंस्कन्दितमार्षभम् ॥५०॥
तथैवाक्षेत्रिणोवीजम्परक्षेत्रप्रवापिणः ।
कुर्वन्तिक्षेत्रिणामर्थंनवीजीलभतेफलम् ॥५१॥
फलन्त्वनभिसन्धायक्षेत्रिणांवीजिनान्तथा ।
प्रत्यक्षंक्षेत्रिणामर्थोवीजाद्योनिर्गरीयसी ॥५२॥

क्रियाऽभ्युपगमात्त्वेतद्बीजार्थंयत्प्रदीयते ।
तस्येहभागिनौदृष्टौबीजीक्षेत्रिकएवच ॥५३॥
ओघवाताहृतंबीजंयस्यक्षेत्रेप्ररोहति ।
क्षेत्रिकस्यैवतद्बीजन्नवप्तालभतेफलम् ॥५४॥
एषधर्म्मोगवाश्वस्यदास्युष्ट्राजाविकस्यच ।
विहंगमहिषीणांचविज्ञेयःप्रसवम्प्रति ॥५५॥
एतद्वःसारफल्गुत्वंबीजयोन्योःप्रकीर्त्तितम् ।
अतःपरम्प्रवक्ष्यामियोषितान्धर्म्ममापदि ॥५६॥
भ्रातुर्ज्येष्ठस्यभार्य्यायागुरुपत्न्यनुजस्यसा ।
यवीयसस्तुयाभार्य्यास्नुषाज्येष्ठस्यसास्मृता ॥५७॥
ज्येष्ठोयवीयसोभार्य्यांयवीयान्वाऽग्रजस्त्रियम् ।
पतितौभवतोगत्वानियुक्तावप्यनापदि ॥५८॥
देवराद्वासपिण्डाद्वास्त्रियासम्यङ्नियुक्तया ।
प्रजेप्सिताऽधिगन्तव्यासन्तानस्यपरिक्षये ॥५९॥
विधवायान्नियुक्तस्तुघृताक्तोवाग्यतोनिशि ।
एकमुत्पादयेत्पुत्रन्नद्वितीयंकथंचन ॥६०॥
द्वितीयमेकेप्रजनम्मन्यन्तेस्त्रीषुतद्विदः ।
अनिर्वृतन्नियोगार्थम्पश्यन्तोधर्म्मतस्तयोः ॥६१॥

विधवायान्नियोगार्थेनिर्वृतेतुयथाविधि ।
गुरुवच्चस्नुषावच्चवर्त्तेयातांपरस्परम् ॥६२॥
नियुक्तौयौविधिंहित्वावर्त्तेयातान्तुकामतः ।
तावुभौपतितौस्यातांस्नुषागगुरुतल्पगौ ॥६३॥
नान्यस्मिन्विधवानारीनियोक्तव्याद्विजातिभिः ।
अन्यस्मिन्हिनियुंजानाधर्म्मंहन्युःसनातनम् ॥६४॥
नोद्वाहिकेषुमंत्रेषुनियोगःकीर्त्यतेक्वचित् ।
नविवाहविधावुक्तंविधवावेदनम्पुनः ॥६५॥
अयंद्विजैर्हिविद्वद्भिःपशुधर्म्मोविगर्हितः ।
मनुष्याणामपिप्रोक्तोवेणेराज्यम्प्रशासति ॥६६॥
समहीमखिलाम्भुंजन्राजर्षिप्रवरःपुरा ।
वर्णानांसंकरंचक्रेकामोपहतचेतनः ॥६७॥
ततःप्रभृतियोमोहात्प्रमीतपतिकांस्त्रियम् ।
नियोजयत्यपत्यार्थन्तंविगर्हन्तिसाधवः ॥६८॥
यस्याम्रियेतकन्यायावाचासत्येकृतेपतिः ।
तामनेनविधानेननिजोविन्देतदेवरः ॥६९॥
यथाविध्यधिगम्यैनांशुक्लवस्त्रांशुचिव्रताम् ।
मिथोभजेताप्रसवात्सकृत्सकृदृतावृतौ ॥७०॥

नदत्वाकस्यचित्कन्याम्पुनर्दद्याद्विचक्षणः १
दत्वापुनःप्रयच्छन्हिप्राप्नोतिपुरुषानृतम् ॥७१॥
विधिवत्प्रतिगृह्यापित्यजेत्कन्यांविगर्हिताम् १
व्याधितांविप्रदुष्टांवाछद्मनाचोपपादिताम् ॥७२॥
यस्तुदोषवतींकन्यामनाख्यायोपपादयेत् १
तस्यतद्वितथंकुर्य्यात्कन्यादातुर्दुरात्मनः ॥७३॥
विधायवृत्तिम्भार्य्यायाःप्रवसेत्कार्यवान्नरः १
अवृत्तिकर्षिताहिस्त्रीप्रदुष्येत्स्थितिमत्यपि ॥७४॥
विधायप्रोषितेवृत्तिंजीवेन्नियममास्थिता १
प्रोषितेत्वविधायैवजीवेच्छिल्पैरगर्हितैः ॥७५॥
प्रोषितोधर्मकार्यार्थम्प्रतीक्ष्योऽष्टौनरःसमाः १
विद्यार्थंषड्यशोऽर्थंवाकामार्थंत्रींस्तुवत्सरान् ॥७६॥
संवत्सरम्प्रतीक्षेतद्विषन्तींयोषितम्पतिः १
ऊर्द्ध्वंसंवत्सरात्त्वेनान्दायंहृत्वानसंवसेत् ॥७७॥
अतिक्रामेत्प्रमत्तंयामत्तंरोगार्त्तमेववा १
सात्रीन्मासान्परित्याज्याविभूषणपरिच्छदा ॥७८॥
उन्मत्तम्पतितंक्लीवमबीजम्पापरोगिणम् १
नत्यागोऽस्तिद्विषन्त्याश्चनचदायापवर्त्तनम् ॥७९॥

मद्यपाऽसाधुवृत्ताचप्रतिकूलाचयाभवेत् ।
व्याधितावाऽधिवेत्तव्याहिंस्राऽर्थघ्नीचसर्वदा ॥८०॥
बन्ध्याऽष्टमेऽधिवेद्याऽब्देदशमेतुमृतप्रजा ।
एकादशेस्त्रीजननीसद्यस्त्वप्रियवादिनी ॥८१॥
यारोगिणीस्यात्तुहितासम्पन्नाचैवशीलतः ।
साऽनुज्ञाप्याधिवेत्तव्यानावमान्याचकर्हिचित् ॥८२॥
अधिविन्नातुयानारीनिर्गच्छेद्रुषितागृहात् ।
सासद्यःसन्निरोद्धव्यात्याज्यावाकुलसन्निधौ ॥८३॥
प्रतिषिद्धाऽपिचेद्यातुमद्यमभ्युदयेष्वपि ।
प्रेक्षासमाजंगच्छेद्वासादण्ड्याकृष्णलानिषट् ॥८४॥
यदिस्वाश्चापराश्चैवविन्देरन्योषितोद्विजाः ।
तासांवर्णक्रमेणस्याज्ज्यैष्ठ्यम्पूजाचवेश्मच ॥८५॥
भर्तुःशरीरशुश्रूषान्धर्मकार्यंचनैत्यिकम् ।
स्वाचैवकुर्यात्सर्वेषान्नास्वजातिःकथंचन ॥८६॥
यस्तुतत्कारयेन्मोहात्सजात्यास्थितयाऽन्यया ।
यथाब्राह्मणचाण्डालःपूर्वदृष्टस्तथैवसः ॥८७॥
उत्कृष्टायाभिरूपायवरायसदृशायच ।
अप्राप्तामपितान्तस्मैकन्यान्दद्याद्यथाविधि ॥८८॥

काममामरणात्तिष्ठेद्गृहेकन्यर्त्तुमत्यपि ।
नचैवैनाम्प्रयच्छेत्तुगुणहीनायकर्हिचित् ॥८९॥
त्रीणिवर्षाण्युदीक्षेतकुमार्य्यृतुमतीसती ।
ऊर्द्ध्वन्तुकालादेतस्माद्विन्देतसदृशम्पतिम् ॥९०॥
अदीयमानाभर्त्तारमधिगच्छेद्यदिस्वयम् ।
नैनःकिंचिदवाप्नोतिनचयंसाऽधिगच्छति ॥९१॥
अलंकारंनाददीतपित्र्यंकन्यास्वयंवरा ।
मातृकम्भ्रातृदत्तंवास्तेनास्याद्यदितंहरेत् ॥९२॥
पित्रेनदद्याच्छुल्कंतुकन्यामृतुमतींहरन् ।
सहिस्वाम्यादतिक्रामेदृतूनाम्प्रतिरोधनात् ॥९३॥
त्रिंशद्वर्षोवहेत्कन्यांहृद्यान्द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षांवाधर्मेसीदतिसत्वरः ॥९४॥
देवदत्ताम्पतिर्भार्यांविन्दतेनेच्छयात्मनः ।
तांसाध्वीम्बिभृयान्नित्यन्देवानाम्प्रियमाचरन् ॥९५॥
प्रजनार्थंस्त्रियःसृष्टाःसन्तानार्थंचमानवाः ।
तस्मात्साधारणोधर्मःश्रुतौपत्न्यासहोदितः ॥९६॥
कन्यायान्दत्तशुल्कायाम्म्रियेतयदिशुल्कदः ।
देवरायप्रदातव्यायदिकन्याऽनुमन्यते ॥९७॥

आददीतनशूद्रोऽपिशुल्कंदुहितरन्ददन् ।
शुल्कंहिगृह्णन्कुरुतेछन्नन्दुहितृविक्रयम् ॥९८॥
एतत्तुनपरेचक्रुर्नापरेजातुसाधवः ।
यदन्यस्यप्रतिज्ञायपुनरन्यस्यदीयते ॥९९॥
नानुशुश्रुमजात्वेतत्पूर्वेष्वपिहिजन्मसु ।
शुल्कसंज्ञेनमूल्येनछन्नन्दुहितृविक्रयम् ॥१००॥
अन्योन्यस्याव्यभिचारोभवेदामरणान्तिकः ।
एषधर्मःसमासेनज्ञेयःस्त्रीपुंसयोःपरः ॥१०१॥
तथानित्यंयतेयातांस्त्रीपुंसौतुकृतक्रियौ ।
यथानाभिचरेतान्तौवियुक्तावितरेतरम् ॥१०२॥
एषस्त्रीपुंसयोरुक्तोधर्मोवोरतिसंहितः ।
आपद्यपत्यप्राप्तिश्चदायभागन्निबोधत ॥१०३॥
ऊर्द्ध्वम्पितुश्चमातुश्चसमेत्यभ्रातरःसमम् ।
भजेरन्पैतृकंरिक्थमनीशास्तेहिजीवतोः ॥१०४॥
ज्येष्ठएवतुगृह्णीयात्पित्र्यन्धनमशेषतः ।
शेषास्तमुपजीवेयुर्यथैवपितरन्तथा ॥१०५॥
ज्येष्ठेनजातमात्रेणपुत्रीभवतिमानवः ।
पितॄणामनृणश्चैवसतस्मात्सर्वमर्हति ॥१०६॥

यस्मिन्नृणंसन्नयतियेनचानन्त्यमश्नुते ।
सएवधर्मजःपुत्रःकामजानितरान्विदुः ॥१०७॥
पितेवपालयेत्पुत्रान्ज्येष्ठोभ्रातॄन्यवीयसः ।
पुत्रवच्चापिवर्त्तेरन्ज्येष्ठेभ्रातरिधर्मतः ॥१०८॥
ज्येष्ठःकुलंवर्द्धयतिविनाशयतिवापुनः ।
ज्येष्ठःपूज्यतमोलोकेज्येष्ठःसद्भिरगर्हितः ॥१०९॥
योज्येष्ठोज्येष्ठवृत्तिःस्यान्मातेवसपितेवसः ।
अज्येष्ठवृत्तिर्यस्तुस्यात्ससम्पूज्यस्तुबन्धुवत् ॥११०॥
एवंसहवसेयुर्वापृथग्वाधर्म्मकाम्यया ।
पृथग्विवर्द्धतेधर्मस्तस्माद्धर्म्यापृथक्क्रिया ॥१११॥
ज्येष्ठस्यविंशउद्धारःसर्वद्रव्याच्चयद्वरम् ।
ततोर्द्धम्मध्यमस्यस्यात्तुरीयन्तुयवीयसः ॥११२॥
ज्येष्ठश्चैवकनिष्ठश्चसंहरेतांयथोदितम् ।
येन्येज्येष्ठकनिष्ठाभ्यांतेषांस्यान्मध्यमन्धनम् ॥११३॥
सर्वेषान्धनजातानामाददीताग्र्यमग्रजः ।
यच्चसातिशयंकिंचिद्दशतश्चाप्नुयाद्वरम् ॥११४॥
उद्धारोनदशस्वस्तिसम्पन्नानांस्वकर्म्मसु ।
यत्किंचिदेवदेयन्तुज्यायसेमानवर्द्धनम् ॥११५॥

एवंसमुद्धृतोद्धारेसमानंशान्प्रकल्पयेत् ।
उद्धारेऽनुद्धृतेत्वेषामियंस्यादंशकल्पना ॥११६॥
एकाधिकंहरेज्ज्येष्ठःपुत्रोऽध्यर्द्धन्ततोऽनुजः ।
अंशमंशंयवीयांसइतिधर्म्मोव्यवस्थितः ॥११७॥
स्वेभ्योंऽशेभ्यस्तुकन्याभ्यःप्रदद्युर्भ्रातरःपृथक् ।
स्वात्स्वादंशाच्चतुर्भागम्पतिताःस्युरदित्सवः ॥११८॥
अजाविकंसैकशफन्नजातुविषमम्भजेत् ।
अजाविकन्तुविषमंज्येष्ठस्यैवविधीयते ॥११९॥
यवीयान्ज्येष्ठभार्यायाम्पुत्रमुत्पादयेद्यदि ।
समस्तत्रविभागःस्यादितिधर्मोव्यवस्थितः ॥१२०॥
उपसर्ज्जनम्प्रधानस्यधर्मतोनोपपद्यते ।
पिताप्रधानम्प्रजनेतस्माद्धर्म्मेणतम्भजेत् ॥१२१॥
पुत्रःकनिष्ठोज्येष्ठायांकनिष्ठायांचपूर्वजः ।
कथन्तत्रविभागःस्यादितिचेत्संशयोभवेत् ॥१२२॥
एकंवृषभमुद्धारंसंहरेतसपूर्वजः ।
ततोऽपरेज्येष्ठवृषास्तदूनानांस्वमातृतः ॥१२३॥
ज्येष्ठस्तुजातोज्येष्ठा       ऋषभषोडश ।
ततःस्वमातृतःशेषाभजेरन्नितिधारणा ॥१२४॥

सदृशस्त्रीषुजातानाम्पुत्राणामविशेषतः ।
नमातृतोज्यैष्ठ्यमस्तिजन्मतोज्यैष्ठ्यमुच्यते ॥१२५॥
जन्मज्येष्ठेनचाह्वानंस्वब्राह्मण्यास्वपिस्मृतम् ।
यमयोश्चैवगर्भेषुजन्मतोज्येष्ठतास्मृता ॥१२६॥
अपुत्रोऽनेनविधिनासुतांकुर्वीतपुत्रिकाम् ।
यदपत्यम्भवेदस्यान्तन्ममस्यात्स्वधाकरम् ॥१२७॥
अनेनतुविधानेनपुराचक्रेऽथपुत्रिकाः ।
विवृद्ध्यर्थंस्ववंशस्यस्वयन्दक्षःप्रजापतिः ॥१२८॥
ददौसदशधर्मायकश्यपायत्रयोदश ।
सोमायराज्ञेसत्कृत्यप्रीतात्मासप्तविंशतिम् ॥१२९॥
यथैवात्मातथापुत्रःपुत्रेणदुहितासमा ।
तस्यामात्मनितिष्ठन्त्यांकथमन्योधनंहरेत् ॥१३०॥
मातुस्तुयौतकंयत्स्यात्कुमारीभागएवसः ।
दौहित्रएवचहरेदपुत्रस्याखिलन्धनम् ॥१३१॥
दौहित्रोह्यखिलंऋक्थमपुत्रस्यपितुर्हरेत् ।
सएवदद्याद्द्वौपिण्डौपित्रेमातामहायच ॥१३२॥
पौत्रदौहित्रयोर्लोकेनविशेषोऽस्तिधर्मतः ।
तयोर्हिमातापितरौसम्भूतौतस्यदेहतः ॥१३३॥

पुत्रिकायांकृतायान्तुयदिपुत्रोऽनुजायते ।
समस्तत्रविभागःस्याज्ज्येष्ठतानास्तिहिस्त्रियाः ॥१३४॥
अपुत्रायाम्मृतायान्तुपुत्रिकायांकथंचन ।
धनन्तत्पुत्रिकाभर्त्ताहरेतैवाविचारयन् ॥१३५॥
अकृतावाकृतावाऽपियंविन्देत्सदृशात्सुतम् ।
पौत्रीमातामहस्तेनदद्यात्पिण्डंहरेद्धनम् ॥१३६॥
पुत्रेणलोकाञ्जयतिपौत्रेणानन्त्यमश्नुते ।
अथपुत्रस्यपौत्रेणब्रध्नस्याप्नोतिविष्टपम् ॥१३७॥
पुन्नाम्नोनरकाद्यस्मात्त्रायतेपितरंसुतः ।
तस्मात्पुत्रइतिप्रोक्तःस्वयमेवस्वयम्भुवा ॥१३८॥
पौत्रदौहित्रयोर्लोकेविशेषोनोपपद्यते ।
दौहित्रोऽपिह्यमुत्रैनंसन्तारयतिपौत्रवत् ॥१३९॥
मातुःप्रथमतःपिण्डंनिर्वपेत्पुत्रिकासुतः ।
द्वितीयन्तुपितुस्तस्यास्तृतीयन्तत्पितुःपितुः ॥१४०॥
उपपन्नोगुणैःसर्वैःपुत्रोयस्यतुदत्रिमः ।
सहरेतैवतद्रिक्थंसम्प्राप्तोऽप्यन्यगोत्रतः ॥१४१॥
गोत्ररिक्थेजनयितुर्नहरेद्दत्रिमःक्वचित् ।
गोत्ररिक्थानुगःपिण्डोव्यपैतिददतःस्वधा ॥१४२॥

अनियुक्तासुतश्चैवपुत्रिण्याप्तश्चदेवरात् ।
उभौतौनार्हतोभागंजारजातककामजौ ॥१४३॥
नियुक्तायामपिपुमान्नार्य्यांजातोऽविधानतः ।
नैवार्हःपैतृकंऋक्थम्पतितोत्पादितोहिसः ॥१४४॥
हरेत्तत्रनियुक्तायांजातःपुत्रोयथौरसः ।
क्षेत्रिकस्यतुतद्बीजन्धर्मतःप्रसवश्चसः ॥१४५॥
धनंयोबिभृयाद्भ्रातुर्मृतस्यस्त्रियमेवच ।
सोऽपत्यम्भ्रातुरुत्पाद्यदद्यात्तस्यैवतद्धनम् ॥१४६॥
यानियुक्ताऽन्यतःपुत्रन्देवराद्वाऽप्यवाप्नुयात् ।
तंकामजमरिक्थीयंवृथोत्पन्नम्प्रचक्षते ॥१४७॥
एतद्विधानंविज्ञेयंविभागस्यैकयोनिषु ।
बह्वीषुचैकजातानान्नानास्त्रीषुनिबोधत ॥१४८॥
ब्राह्मणस्यानुपूर्व्येणचतस्रस्तुयदिस्त्रियः ।
तासाम्पुत्रेषुजातेषुविभागेऽयंविधिःस्मृतः ॥१४९॥
कीनाशोगोवृषोयानमलंकारश्चवेश्मच ।
विप्रस्योद्धारिकन्देयमेकांशश्चप्रधानतः ॥१५०॥
त्र्यंशन्दायाद्धरेद्विप्रोद्वावंशौक्षत्रियासुतः ।
वैश्याजःसार्द्धमेवांशमंशंशूद्रासुतोहरेत् ॥१५१॥

सर्वंवाऽऽक्थजातन्तद्दशधापरिकल्प्यच ।
धर्म्यंविभागंकुर्वीतविधिनाऽनेनधर्मवित् ॥१५२॥
चतुरोंऽशान्हरेद्विप्रस्त्रीनंशान्क्षत्रियासुतः ।
वैश्यापुत्रोहरेद्द्व्यंशमंशंशूद्रासुतोहरेत् ॥१५३॥
यद्यपिस्यात्तुसत्पुत्रोऽप्यसत्पुत्रोऽपिवाभवेत् ।
नाधिकन्दशमाद्दद्याच्छूद्रापुत्रायधर्मतः ॥१५४॥
ब्राह्मणक्षत्रियविशांशूद्रापुत्रोनरिक्थभाक् ।
यदेवास्यपितादद्यात्तदेवास्यधनम्भवेत् ॥१५५॥
समवर्णासुयेजाताःसर्वेपुत्राद्विजन्मनाम् ।
उद्धारंज्यायसेदत्वाभजेरन्नितरेसमम् ॥१५६॥
शूद्रस्यतुसवर्णैवनान्याभार्य्याविधीयते ।
तस्यांजाताःसमांशाःस्युर्यदिपुत्रशतम्भवेत् ॥१५७॥
पुत्रान्द्वादशयानाहनृणांस्वायम्भुवोमनुः ।
तेषांषड्बन्धुदायादाःषडदायादबान्धवाः ॥१५८॥
औरसःक्षेत्रजश्चैवदत्तःकृत्रिमएवच ।
गूढोत्पन्नोऽपविद्धश्चदायादाबान्धवाश्चषट् ॥१५९॥
कानीनश्चसहोढश्चक्रीतःपौनर्भवस्तथा ।
स्वयन्दत्तश्चशौद्रश्चषडदायादबान्धवाः ॥१६०॥

याद्दशम्फलमाप्नोतिकुप्लवैःसन्तरन्जलम् ।
ताद्दशम्फलमाप्नोतिकुपुत्रैःसन्तरंस्तमः ॥१६१॥
यद्येकऋक्थिनौस्यातामौरसक्षेत्रजौसुतौ ।
यस्ययत्पैतृकंऋक्थंसतद्गृह्णीतनेतरः ॥१६२॥
एकएवौरसःपुत्रःपित्र्यस्यवसुनःप्रभुः ।
शेषाणामानृशंस्यार्थम्प्रदद्यात्तुप्रजीवनम् ॥१६३॥
षष्ठन्तुक्षेत्रजस्यांशम्प्रदद्यात्पैतृकाद्धनात् ।
औरसोविभजन्दायम्पित्र्यम्पंचममेववा ॥१६४॥
औरसक्षेत्रजौपुत्रौपितृऋक्थस्यभागिनौ ।
दशापरेतुक्रमशोगोत्रऋक्थांशभागिनः ॥१६५॥
स्वेक्षेत्रेसंस्कृतायान्तुस्वयमुत्पादयेद्धियम् ।
तमौरसंविजानीयात्पुत्रम्प्रथमकल्पितम् ॥१६६॥
यस्तल्पजःप्रमीतस्यक्लीवस्यव्याधितस्यवा ।
स्वधर्मेणनियुक्तायांसपुत्रःक्षेत्रजःस्मृतः ॥१६७॥
मातापितावादद्यातांयमद्भिःपुत्रमापदि ।
सद्दशम्प्रीतिसंयुक्तंसज्ञेयोदत्रिमःसुतः ॥१६८॥
सद्दशन्तुप्रकुर्याद्यंगुणदोषविचक्षणम् ।
पुत्रम्पुत्रगुणैर्युक्तंसविज्ञेयश्चकृत्रिमः ॥१६९॥

उत्पद्यतेगृहेयस्यनचज्ञायेतकस्यसः ।
सगृहेगूढउत्पन्नस्तस्यस्याद्यस्यतल्पजः ॥१७०॥
मातापितृभ्यामुत्सृष्टन्तयोरन्यतरेणवा ।
यम्पुत्रम्परिगृह्णीयादपविद्धःसउच्यते ॥१७१॥
पितृवेश्मनिकन्यातुयम्पुत्रंजनयेद्रहः ।
तंकानीनंवदेन्नाम्नावोढुःकन्यासमुद्भवम् ॥१७२॥
यागर्भिणीसंस्क्रियतेज्ञाताऽज्ञाताऽपिवासती ।
वोढुःसगर्भोभवतिसहोढइतिचोच्यते ॥१७३॥
क्रीणीयाद्यस्त्वपत्यार्थम्मातापित्रोर्यमन्तिकात् ।
सक्रीतकःसुतस्तस्यसदृशोऽसदृशोऽपिवा ॥१७४॥
यापत्यावापरित्यक्ताविधवावास्वयेच्छया ।
उत्पादयेत्पुनर्भूत्वासपौनर्भवउच्यते ॥१७५॥
साचेदक्षतयोनिःस्याद्गतप्रत्यागताऽपिवा ।
पौनर्भवेनभर्त्रासापुनःसंस्कारमर्हति ॥१७६॥
मातापितृविहीनोयस्त्यक्तोवास्यादकारणात् ।
आत्मानंस्पर्शयेद्यस्मैस्वयन्दत्तस्तुसःस्मृतः ॥१७७॥
यम्ब्राह्मणस्तुशूद्रायांकामादुत्पादयेत्सुतम् ।
सपारयन्नेवशवस्तस्मात्पारशवःस्मृतः ॥१७८॥

दास्यांवादासदास्यांवायःशूद्रस्यसुतोभवेत् ।
सोऽनुज्ञातोहरेदंशमितिधर्मोव्यवस्थितः ॥१७९॥
क्षेत्रजादीन्सुतानेतानेकादशयथोदितान् ।
पुत्रप्रतिनिधीनाहुःक्रियालोपान्मनीषिणः ॥१८०॥
यएतेऽभिहिताःपुत्राःप्रसंगादन्यबीजजाः ।
यस्यतेबीजतोजातास्तस्यतेनेतरस्यतु ॥१८१॥
भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।
सर्वांस्तांस्तेनपुत्रेणपुत्रिणोमनुरब्रवीत् ॥१८२॥
सर्वासामेकपत्नीनामेकाचेत्पुत्रिणीभवेत् ।
सर्वास्तास्तेनपुत्रेणप्राहपुत्रवतीर्मनुः ॥१८३॥
श्रेयसःश्रेयसोऽलाभेपापीयान्रिक्थमर्हति ।
बहवश्चेत्तुसदृशाःसर्वेरिक्थस्यभागिनः ॥१८४॥
नभ्रातरोनपितरःपुत्रारिक्थहराःपितुः ।
पिताहरेदपुत्रस्यरिक्थम्भ्रातरएवच ॥१८५॥
त्रयाणामुदकंकार्यंत्रिषुपिण्डःप्रवर्त्तते ।
चतुर्थःसम्प्रदातैषाम्पंचमोनोपपद्यते ॥१८६॥
अनन्तरःसपिण्डाद्यस्तस्यतस्यधनम्भवेत् ।
अतऊर्द्ध्वंसकुल्यःस्यादाचार्य्यःशिष्यएववा ॥१८७॥

सर्वेषामप्यभावेतुब्राह्मणाऋक्थभागिनः । 
त्रैविद्याःशूचयोदान्तास्तथाधर्मोनहीयते ॥१८८॥
अहार्य्यम्ब्राह्मणद्रव्यंराज्ञानित्यमितिस्थितिः । 
इतरेषान्तुवर्णानांसर्वाभावेहरेन्नृपः ॥१८९॥
संस्थितस्यानपत्यस्यसगोत्रात्पुत्रमाहरेत् । 
तत्रयदृक्थजातंस्यात्तत्तस्मिन्प्रतिपादयेत् ॥१९०॥
द्वौतुयौविवदेयातान्द्वाभ्यांजातौस्त्रियाधने । 
तयोर्यद्यस्यपित्र्यंस्यात्तत्सगृह्णीतनेतरः ॥१९१॥
जनन्यांसंस्थितायान्तुसमंसर्वेसहोदराः । 
भजेरन्मातृकंऋक्थम्भगिन्यश्चसनाभयः ॥१९२॥
यास्तासांस्युर्दुहितरस्तासामपियथार्हतः । 
मातामह्याधनात्किंचित्प्रदेयम्प्रीतिपूर्वकम् ॥१९३॥
अध्यग्न्यध्यावाहनिकन्दत्तंचप्रीतिकर्मणि । 
भ्रातृमातृपितृप्राप्तंषड्विधंस्त्रीधनंस्मृतम् ॥१९४॥
अन्वाधेयंचयद्दत्तम्पत्याप्रीतेनचैवयत् । 
पत्यौजीवतिवृत्तायाःप्रजायास्तद्धनम्भवेत् ॥१९५॥
ब्राह्मदैवार्षगान्धर्वप्राजापत्येषुयद्वसु । 
अप्रजायामतीतायाम्भर्तुरेवतदिष्यते ॥१९६॥

यत्त्वस्याःस्याद्धनन्दत्तंविवाहेष्वासुरादिषु ।
अप्रजायामतीतायाम्मातापित्रोस्तदिष्यते ॥१९७॥
स्त्रियान्तुयद्भवेद्वित्तम्पित्रादत्तंकथंचन ।
ब्राह्मणीतद्धरेत्कन्यातदपत्यस्यवाभवेत् ॥१९८॥
ननिर्हारंस्त्रियःकुर्युःकुटुम्बाद्बहुमध्यगात् ।
स्वकादपिचवित्ताद्धिस्वस्यभर्तुरनाज्ञया ॥१९९॥
पत्यौजीवतियःस्त्रीभिरलंकारोधृतोभवेत् ।
नतम्भजेरन्दायादाभजमानाःपतन्तिते ॥२००॥
अनंशौक्लीवपतितौजात्यन्धबधिरौतथा ।
उन्मत्तजडमूकाश्चयेचकेचिन्निरिन्द्रियाः ॥२०१॥
सर्वेषामपितुन्याय्यन्दातुंशक्त्यामनीषिणा ।
ग्रासाच्छादनमत्यन्तम्पतितोह्यददद्भवेत् ॥२०२॥
यद्यर्थितातुदारैःस्यात्क्लीवादीनांकथंचन ।
तेषामुत्पन्नतन्तूनामपत्यन्दायमर्हति ॥२०३॥
यत्किंचित्पितरिप्रेतेधनंज्येष्ठोऽधिगच्छति ।
भागोयवीयसान्तत्रयदिविद्यानुपालिनः ॥२०४॥
अविद्यानान्तुसर्वेषामीहातश्चेद्धनम्भवेत् ।
समस्तत्रविभागःस्यादपित्र्यइतिधारणा ॥२०५॥

विद्याधनन्तुयद्यस्यतत्तस्यैवधनम्भवेत् ।
मैत्र्यमौद्वाहिकंचैवमाधुपर्किकमेवच ॥२०६॥
भ्रातॄणांयस्तुनेहेतधनंशक्तःस्वकर्मणा ।
सनिर्भाज्यःस्वकादंशात्किंचिद्दत्त्वोपजीवनम् ॥२०७॥
अनुपघ्नन्पितृद्रव्यंश्रमेणयदुपार्ज्जितम् ।
स्वयमीहितलब्धन्तन्नाकामोदातुमर्हति ॥२०८॥
पैतृकन्तुपिताद्रव्यमनवाप्तंयदाप्नुयात् ।
नतत्पुत्रैर्भजेत्सार्द्धमकामःस्वयमर्ज्जितम् ॥२०९॥
विभक्ताःसहजीवन्तोविभजेरन्पुनर्यदि ।
समस्तत्रविभागःस्याज्ज्यैष्ठ्यन्तत्रनविद्यते ॥२१०॥
येषांज्येष्ठःकनिष्ठोवाहीयेतांशप्रदानतः ।
म्रियेतान्यतरोवाऽपितस्यभागोनलुप्यते ॥२११॥
सोदर्य्याविभजेरंस्तंसमेत्यसहिताःसमम् ।
भ्रातरोयेचसंसृष्टाभगिन्यश्चसनाभयः ॥२१२॥
योज्येष्ठोविनिकुर्वीतलोभाद्भ्रातॄन्यवीयसः ।
सोऽज्येष्ठःस्यादभागश्चनियन्तव्यश्चराजभिः ॥२१३॥
सर्वएवविकर्म्मस्थानार्हन्तिभ्रातरोधनम् ।
नचादत्त्वाकनिष्ठेभ्योज्येष्ठःकुर्वीतयौतकम् ॥२१४॥

भ्रातॄणामविभक्तानांयद्युत्थानम्भवेत्सह । 
नपुत्रभागंविषमम्पिताद्द्यात्कथंचन ॥२१५॥
ऊर्द्ध्वंविभागाज्जातस्तुपित्र्यमेवहरेद्धनम् । 
संसृष्टास्तेनवायेस्युर्विभजेतसतैःसह ॥२१६॥
अनपत्यस्यपुत्रस्यमातादायमवाप्नुयात् । 
मातर्यपिचवृत्तायाम्पितुर्माताहरेद्धनम् ॥२१७॥
ऋणेधनेचसर्वस्मिन्प्रविभक्तेयथाविधि । 
पश्चाद्दृश्येतयत्किंचित्तत्सर्वंसमतान्नयेत् ॥२१८॥
वस्त्रम्पत्रमलंकारंकृतान्नमुदकंस्त्रियः । 
योगक्षेमम्प्रचारंचनविभाज्यम्प्रचक्षते ॥२१९॥
अयमुक्तोविभागोवःपुत्राणांचक्रियाविधिः । 
क्रमशःक्षेत्रजादीनान्द्यूतधर्मन्निबोधत ॥२२०॥
द्यूतंसमाह्वयंचैवराजाराष्ट्रान्निवारयेत् । 
राजान्तकरणावेतौद्वौदोषौपृथिवीक्षिताम् ॥२२१॥
प्रकाशमेततास्कर्यंयद्देवनसमाह्वयौ । 
तयोर्नित्यम्प्रतीघातेनृपतिर्यत्नवान्भवेत् ॥२२२॥
अप्राणिभिर्यत्क्रियतेतल्लोकेद्यूतमुच्यते । 
प्राणिभिःक्रियतेयस्तुसविज्ञेयःसमाह्वयः ॥२२३॥

द्यूतंसमाह्वयंचैवयःकुर्य्यात्कारयेतवा ।
तान्सर्वान्घातयेद्राजाशूद्रांश्चद्विजलिंगिनः ॥२२४॥
कितवान्कुशीलवान्क्रूरान्पाषंडस्थांश्चमानवान् ।
विकर्मस्थाञ्छौण्डिकांश्चक्षिप्रन्निर्वासयेत्पुरात् ॥२२५॥
एतेराष्ट्रेवर्त्तमानाराज्ञःप्रच्छन्नतस्कराः ।
विकर्मक्रिययानित्यम्बाधन्तेभद्रिकाःप्रजाः ॥२२६॥
द्यूतमेतत्पुराकल्पेदृष्टंवैरकरम्महत् ।
तस्माद्द्यूतन्नसेवेतहास्यार्थमपिबुद्धिमान् ॥२२७॥
प्रच्छन्नंवाप्रकाशंवातन्निषेवेतयोनरः ।
तस्यदण्डविकल्पःस्याद्यथेष्टंनृपतेस्तथा ॥२२८॥
क्षत्रविट्शूद्रयोनिस्तुदण्डन्दातुमशक्नुवन् ।
आनृण्यंकर्मणागच्छेद्विप्रोदद्याच्छनैःशनैः ॥२२९॥
स्त्रीबालोन्मत्तवृद्धानान्दरिद्राणांचरोगिणाम् ।
शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम् ॥२३०॥
येनियुक्तास्तुकार्य्येषुहन्युःकार्य्याणिकार्यिणाम् ।
धनोष्मणापच्यमानास्तान्निःस्वान्कारयेन्नृपः ॥२३१॥
कूटशासनकर्तॄंश्चप्रकृतीनांचदूषकान् ।
स्त्रीबालब्राह्मणघ्नांश्चहन्याद्द्विट्सेविनस्तथा ॥२३२॥

तीरितंचानुशिष्टंचयत्रक्वचनयद्भवेत् ।
कृतन्तद्धर्मतोविद्यान्नतद्भूयोनिवर्त्तयेत् ॥२३३॥
अमात्याःप्राड्विवाकोवायत्कुर्युःकार्यमन्यथा ।
तत्स्वयंनृपतिःकुर्यान्तान्सहस्रंचदण्डयेत् ॥२३४॥
ब्रह्महाचसुरापश्चस्तेयीचगुरुतल्पगः ।
एतेसर्वेपृथग्ज्ञेयामहापातकिनोनराः ॥२३५॥
चतुर्णामपिचैतेषाम्प्रायश्चित्तमकुर्वताम् ।
शारीरन्धनसंयुक्तन्दण्डन्धर्म्यम्प्रकल्पयेत् ॥२३६॥
गुरुतल्पेभगःकार्य्यःसुरापानेसुराध्वजः ।
स्तेयेचश्ववपदंकार्य्यम्ब्रह्महण्यशिराःपुमान ॥२३७॥
असम्भोज्याह्यसंयाज्याअसंपाठ्याऽविवाहिनः ।
चरेयुःपृथिवीन्दीनाःसर्वधर्म्मवहिष्कृताः ॥२३८॥
ज्ञातिसम्बन्धिभिस्त्वेतेत्यक्तव्याःकृतलक्षणाः ।
निर्दयानिर्नमस्कारास्तन्मनोरनुशासनम् ॥२३९॥
प्रायश्चित्तन्तुकुर्वाणाःसर्ववर्णायथोदितम् ।
नांक्याराज्ञाललाटेस्युर्दाप्यास्तूत्तमसाहसम् ॥२४०॥
आगःसुब्राह्मणस्यैवकार्योमध्यमसाहसः ।
विवास्योवाभवेद्राष्ट्रात्सद्रव्यःसपरिच्छदः ॥२४१॥

इतरेकृतवन्तस्तुपापान्येतान्यकामतः ।
सर्वस्वहारमर्हन्तिकामतस्तुप्रवासनम् ॥२४२॥
नाददीतनृपःसाधुर्महापातकिनोधनम् ।
आददानस्तुतल्लोभात्तेनदोषेणलिप्यते ॥२४३॥
अप्सुप्रवेश्यतन्दण्डंवरुणायोपपादयेत् ।
श्रुतवृत्तोपपन्नेवाब्राह्मणेप्रतिपादयेत् ॥२४४॥
ईशोदण्डस्यवरुणोराज्ञान्दण्डधरोहिसः ।
ईशःसर्वस्यजगतोब्राह्मणोवेदपारगः ॥२४५॥
यत्रवर्जयतेराजापापकृद्भ्योधनागमम् ।
तत्रकालेनजायन्तेमानवादीर्घजीविनः ॥२४६॥
निष्पद्यन्तेचसस्यानियथोप्तानिविशाम्पृथक् ।
बालाश्चनप्रमीयन्तेविकृतन्नचजायते ॥२४७॥
ब्राह्मणान्बाधमानन्तुकामादवरवर्णजम् ।
हन्याच्चित्रैर्बधोपायैरुद्वेजनकरैर्नृपः ॥२४८॥
यावानबध्यस्यबधेतावानूबध्यस्यमोक्षणे ।
अधर्मोनृपतेर्दृष्टोधर्मस्तुविनियच्छतः ॥२४९॥
उदितोऽयंविस्तरशोमिथोविवदमानयोः ।
अष्टादशसुमार्गेषुव्यवहारस्यनिर्णयः ॥२५०॥

एवंधर्म्याणिकार्य्याणिसम्यक्कुर्वन्महीपतिः ।
देशानलब्धाँल्लिप्सेतलब्धांश्चपरिपालयेत् ॥२५१॥
सम्यङ्निविष्टदेशस्तुकृतदुर्गश्चशास्त्रतः ।
कंटकोद्धरणेनित्यमातिष्ठेद्यत्नमुत्तमम् ॥२५२॥
रक्षणादार्य्यवृत्तानांकंटकानांचशोधनात् ।
नरेन्द्रास्त्रिदिवंयान्तिप्रजापालनतत्पराः ॥२५३॥
अशासंस्तस्करान्यस्तुबलिंगृह्णातिपार्थिवः ।
तस्यप्रक्षुभ्यतेराष्ट्रंस्वर्गाच्चपरिहीयते ॥२५४॥
निर्भयन्तुभवेद्यस्यराष्ट्रम्बाहुबलाश्रितम् ।
तस्यतद्वर्द्धतेनित्यंसिच्यमानइवद्रुमः ॥२५५॥
द्विविधांस्तस्करान्विद्यात्परद्रव्यापहारकान् ।
प्रकाशांश्चाप्रकाशांश्चचारचक्षुर्महीपतिः ॥२५६॥
प्रकाशवंचकास्तेषांनानापण्योपजीविनः ।
प्रच्छन्नवंचकास्त्वेतेयेस्तेनाटविकादयः ॥२५७॥
उत्कोचकाश्चोपधिकावंचकाःकितवास्तथा ।
मंगलादेशवृत्ताश्चभद्राश्चेक्षणिकैःसह ॥२५८॥
असम्यक्कारिणश्चैवमहामात्राश्चिकित्सकाः ।
शिल्पोपचारयुक्ताश्चनिपुणाःपण्ययोषितः ॥२५९॥

एवमादीन्विजानीयात्प्रकाशाँल्लोककंटकान् ।
निगूढचारिणश्चान्याननार्य्यानार्य्यलिंगिनः ॥२६०॥
तान्विदित्वासुचरितैर्गूढैस्तत्कर्म्मकारिभिः ।
चारैश्चानेकसंस्थानैःप्रोत्साद्यवशमानयेत् ॥२६१॥
तेषान्दोषानभिख्याप्यस्वेस्वेकर्म्मणितत्वतः ।
कुर्वीतशासनंराजासम्यक्सारापराधतः ॥२६२॥
नहिदण्डादृतेशक्यःकर्तुम्पापविनिग्रहः ।
स्तेनानाम्पापबुद्धीनान्निभृतंचरतांक्षितौ ॥२६३॥
सभाप्रपापूपशालावेशमद्यान्नविक्रयाः ।
चतुष्पथाश्चैत्यवृक्षाःसमाजाःप्रेक्षणानिच ॥२६४॥
जीर्णोद्यानान्यरण्यानिकारुकावेशनानिच ।
शून्यानिचाप्यगाराणिवनान्युपवनानिच ॥२६५॥
एवंविधान्नृपोदेशान्गुल्मैःस्थावरजङ्गमैः ।
तस्करप्रतिषेधार्थंचारैश्चाप्यनुचारयेत ॥२६६॥
तत्सहायैरनुगतैर्नानाकर्म्मप्रवेदिभिः ।
विद्यादुत्सादयेच्चैवनिपुणैःपूर्वतस्करैः ॥२६७॥
भक्ष्यभोज्योपदेशैश्चब्राह्मणानांचदर्शनैः ।
शौर्य्यकर्म्मापदेशैश्चकुर्युस्तेषांसमागमम् ॥२६८॥

येतत्रनोपसर्पेयुर्मूलप्रणिहिताश्चये ।
तान्प्रसह्यनृपोहन्यात्समित्रज्ञातिबान्धवान् ॥२६९॥
नहोढेनविनाचौरंघातयेद्धार्म्मिकोनृपः ।
सहोढंसोपकरणंघातयेदविचारयन् ॥२७०॥
ग्रामेष्वपिचयेकेचिच्चौराणाम्भक्तदायकाः ।
भाण्डावकाशदाश्चैवसर्वांस्तानपिघातयेत् ॥२७१॥
राष्ट्रेषुरक्षाधिकृतान्सामन्तांश्चैवचोदितान् ।
अभ्याघातेषुमध्यस्थाञ्छिष्याच्चौरानिवद्रुतम् ॥२७२॥
यश्चापिधर्मसमयात्प्रच्युतोधर्मजीवनः ।
दण्डेनैवतमप्योषेत्स्वकाद्धर्माद्धिविच्युतम् ॥२७३॥
ग्रामघातेहिताभंगेपथिमोषाभिदर्शने ।
शक्तितोनाभिधावन्तोनिर्वास्याःसपरिच्छदाः ॥२७४॥
राज्ञःकोषापहर्तॄंश्चप्रतिकूलेषुचस्थितान् ।
घातयेद्विविधैर्दण्डैररीणांचोपजापकान् ॥२७५॥
सन्धिंछित्वातुयेचौर्य्यंरात्रौकुर्वन्तितस्कराः ।
तेषाञ्छित्वानृपोहस्तौतीक्ष्णेशूलेनिवेशयेत् ॥२७६॥
अंगुलीग्रंथिभेदस्यच्छेदयेत्प्रथमेग्रहे ।
द्वितीयेहस्तचरणौतृतीयेबधमर्हति ॥२७७॥

अग्निदान्भक्तदांश्चैवतथाशस्त्रावकाशदान् ।
सन्निधातॄंश्चमोषस्यहन्याच्चोरमिवेश्वरः ॥२७८॥
तडागभेदकंहन्यादप्सुशुद्धबधेनवा ।
तद्वाऽपिप्रतिसंस्कुर्य्याद्दाप्यस्तूत्तमसाहसम् ॥२७९॥
कोष्ठागारायुधागारदेवतागारभेदकान् ।
हस्त्यश्वरथहर्तॄंश्चहन्यादेवाविचारयन् ॥२८०॥
यस्तुपूर्वनिविष्टस्यतडागस्योदकंहरेत् ।
आगमंवाऽप्यपाम्भिन्द्यात्सदाप्यःपूर्वसाहसम् ॥२८१॥
समुत्सृजेद्राजमार्गेयस्त्वमेध्यमनापदि ।
सद्वौकार्षापणौदद्यादमेध्यंचाशुशोधयेत् ॥२८२॥
आपद्गतोऽथवावृद्धोगर्भिणीबालएववा ।
परिभाषणमर्हन्तितच्चशोध्यमितिस्थितिः ॥२८३॥
चिकित्सकानांसर्वेषाम्मिथ्याप्रचरतान्दमः ।
अमानुषेषुप्रथमोमानुषेषुतुमध्यमः ॥२८४॥
संक्रमध्वजयष्टीनाम्प्रतिमानांचभेदकः ।
प्रतिकुर्य्याच्चतत्सर्वम्पंचदद्याच्छतानिच ॥२८५॥
अदूषितानान्द्रव्याणान्दूषणेभेदनेतथा ।
मणीनामपवेधेचदण्डःप्रथमसाहसः ॥२८६॥

समैर्हिविषमंयस्तुचरेद्वैमूल्यतो-पिवा ।
सप्राप्नुयाद्दमम्पूर्वन्नरोमध्यममेववा ॥२८७॥
बन्धनानिचसर्वाणिराजामार्गेनिवेशयेत् ।
दुःखितायत्रदृश्येरन्विकृताःपापकारिणः ॥२८८॥
प्राकारस्यचभेत्तारम्परिखाणांचपूरकम् ।
द्वाराणांचैवभंक्तारंक्षिप्रमेवप्रवासयेत् ॥२८९॥
अभिचारेषुसर्वेषुकर्त्तव्योद्विशतोदमः ।
मूलकर्म्मणिचानाप्तेःकृत्यासुविविधासुच ॥२९०॥
अवीजविक्रयीचैववीजोत्कृष्टन्तथैवच ।
मर्य्यादाभेदकश्चैवविकृतम्प्राप्नुयाद्वधम् ॥२९१॥
सर्वकण्टकपापिष्ठंहेमकारन्तुपार्थिवः ।
प्रवर्त्तमानमन्यायेच्छेदयेल्लवशःक्षुरैः ॥२९२॥
सीताद्रव्यापहरणेशस्त्राणामौषधस्यच ।
कालमासाद्यकार्य्यंचराजादण्डंप्रकल्पयेत् ॥२९३॥
स्वाम्यमात्यौपुरंराष्ट्रंकोषदण्डौसुहृत्तथा ।
सप्तप्रकृतयोह्येताःसप्तांगंराज्यमुच्यते ॥२९४॥
सप्तानाम्प्रकृतीनान्तुराज्यस्यासांयथाक्रमम् ।
पूर्वम्पूर्वंगुरुतरंजानीयाद्व्यसनम्महत् ॥२९५॥

सप्तांगस्येहराज्यस्यविष्टब्धस्यत्रिदण्डवत् ।
अन्योऽन्यगुणवैशेष्यान्नकिंचिदतिरिच्यते ॥२९६॥
तेषुतेषुतुकृत्येषुतत्तदंगंविशिष्यते ।
येनयत्साध्यतेकार्यन्तत्तस्मिन्श्रेष्ठमुच्यते ॥२९७॥
चारेणोत्साहयोगेनक्रिययैवचकर्मणाम् ।
स्वशक्तिम्परशक्तिंचनित्यंविद्यान्महीपतिः ॥२९८॥
पीडनानिचसर्वाणिव्यसनानितथैवच ।
आरभेततत:कार्यसंचिन्त्यगुरुलाघवम् ॥२९९॥
आरभेतैवकर्माणिश्रान्त:श्रान्त:पुन:पुन: ।
कर्माण्यारभमाणंहिपुरुषंश्रीर्निषेवते ॥३००॥
कृतंत्रेतायुगंचैवद्वापरंकलिरेवच ।
राज्ञोवृत्तानिसर्वाणिराजाहियुगमुच्यते ॥३०१॥
कलिःप्रसुप्तोभवतिसजाग्रद्द्वापरंयुगम् ।
कर्मस्वभ्युद्यतस्त्रेताविचरंस्तुकृतंयुगम् ॥३०२॥
इन्द्रस्यार्कस्यवायोश्चयमस्यवरुणस्यच ।
चन्द्रस्याग्नेःपृथिव्याश्चतेजोवृत्तन्नृपश्चरेत् ॥३०३॥
वार्षिकांश्चतुरोमासान्यथेन्द्रोऽभिप्रवर्षति ।
तथाऽभिवर्षेत्स्वंराष्ट्रंकामैरिन्द्रव्रतंचरन् ॥३०४॥

अष्टौमासान्यथादित्यस्तोयंहरतिरश्मिभिः ।
तथाहरेत्करंराष्ट्रान्नित्यमर्कव्रतंहितत् ॥३०५॥
प्रविश्यसर्वभूतानियथाचरतिमारुतः ।
तथाचारैःप्रवेष्टव्यंव्रतमेतद्धिमारुतम् ॥३०६॥
यथायमःप्रियद्वेष्यौप्राप्तेकालेनियच्छति ।
तथाराज्ञानियन्तव्याःप्रजास्तद्धियमव्रतम् ॥३०७॥
वरुणेनयथापाशैर्बद्धएवाभिदृश्यते ।
तथापापान्निगृह्णीयाद्व्रतमेतद्धिवारुणम् ॥३०८॥
परिपूर्णंयथाचन्द्रंदृष्ट्वाहृष्यन्तिमानवाः ।
तथाप्रकृतयोयस्मिन्सचान्द्रव्रतिकोनृपः ॥३०९॥
प्रतापयुक्तस्तेजस्वीनित्यंस्यात्पापकर्मसु ।
दुष्टसामन्तहिंस्रश्चतदाग्नेयंव्रतंस्मृतम् ॥३१०॥
यथासर्वाणिभूतानिधराधारयतेसमम् ।
तथासर्वाणिभूतानिबिभ्रतःपार्थिवंव्रतम् ॥३११॥
एतैरुपायैरन्यैश्चयुक्तोनित्यमतन्द्रितः ।
स्तेनान्राजानिगृह्णीयात्स्वराष्ट्रेपरएवच ॥३१२॥
परामप्यापदम्प्राप्तोब्राह्मणान्नप्रकोपयेत् ।
तेह्येनंकुपिताहन्युःसद्यःसबलवाहनम् ॥३१३॥

यैःकृतःसर्वभक्ष्योऽग्निरपेयश्चमहोदधिः ।
क्षयीचाप्यायितःसोमःकोननश्येत्प्रकोप्यतान् ॥३१४॥
लोकानन्यान्सृजेयुर्येलोकपालांश्चकोपिताः ।
देवान्कुर्युरदेवांश्चकःक्षिण्वंस्तान्समृध्नुयात् ॥३१५॥
यानुपाश्रित्यतिष्ठन्तिलोकादेवाश्चसर्वदा ।
ब्रह्मचैवधनंयेषांकोहिंस्यात्तान्जिजीविषुः ॥३१६॥
अविद्वांश्चैवविद्वांश्चब्राह्मणोदैवतम्महत् ।
प्रणीतश्चाप्रणीतश्चयथाऽग्निर्दैवतम्महत् ॥३१७॥
श्मशानेष्वपितेजस्वीपावकोनैवदुष्यति ।
हूयमानश्चयज्ञेषुभूयएवाभिवर्द्धते ॥३१८॥
एवंयद्यप्यनिष्टेषुवर्त्तन्तेसर्वकर्म्मसु ।
सर्वथाब्राह्मणाःपूज्याःपरमन्दैवतंहितत् ॥३१९॥
क्षत्रस्यातिप्रवृद्धस्यब्राह्मणान्प्रतिसर्वशः ।
ब्रह्मैवसन्नियन्तृस्यात्क्षत्रंहिब्रह्मसम्भवम् ॥३२०॥
अद्भ्योऽग्निर्ब्रह्मतःक्षत्रमश्मनोलोहमुत्थितम् ।
तेषांसर्वत्रगन्तेजःस्वासुयोनिषुशाम्यति ॥३२१॥
नाब्रह्मक्षत्रमृध्नोतिनाक्षत्रम्ब्रह्मवर्द्धते ।
ब्रह्मक्षत्रंचसम्पृक्तमिहचामुत्रवर्द्धते ॥३२२॥

दत्वाधनन्तुविप्रेभ्यःसर्वंदण्डसमुत्थितम् ।
पुत्रेराज्यंसमासृज्यकुर्वीतप्रायणंरणे ॥३२३॥
एवंचरन्सदायुक्तोराजधर्मेषुपार्थिवः ।
हितेषुचैवलोकस्यसर्वान्भृत्यान्नियोजयेत् ॥३२४॥
एषो ऽखिलःकर्मविधिरुक्तोराज्ञःसनातनः ।
इमंकर्मविधिंविद्यात्क्रमशोवैश्यशूद्रयोः ॥३२५॥
वैश्यस्तुकृतसंस्कारःकृत्वादारपरिग्रहम् ।
वार्तायान्नित्ययुक्तःस्यात्पशूनांचैवरक्षणे ॥३२६॥
प्रजापतिर्हिवैश्यायसृष्ट्वापरिददेपशून् ।
ब्राह्मणायचराज्ञेचसर्वाःपरिददेप्रजाः ॥३२७॥
नचवैश्यस्यकामःस्यान्नरक्षेयम्पशूनिति ।
वैश्येचेच्छतिनान्येनरक्षितव्याःकथंचन ॥३२८॥
मणिमुक्ताप्रवालानांलोहानान्तान्तवस्यच ।
गन्धानांचरसानांचविद्यादर्घबलाबलम् ॥३२९॥
वीजानामुप्तिविच्चस्यात्क्षेत्रदोषगुणस्यच ।
मानयोगंचजानीयात्तुलायोगांश्चसर्वशः ॥३३०॥
सारासारंचभाण्डानान्देशानांचगुणागुणान् ।
लाभालाभंचपण्यानांपशूनाम्परिवर्द्धनम् ॥३३१॥

भृत्यानांचभृतिंविद्याद्भाषाश्चविविधानृणाम् ।
द्रव्याणांस्थानयोगांश्चक्रयविक्रयमेवच ॥३३२॥
धर्मेणचद्रव्यवृद्धावातिष्ठेद्यत्नमुत्तमम् ।
दद्याच्चसर्वभूतानामन्नमेवप्रयत्नतः ॥३३३॥
विप्राणांवेदविदुषांगृहस्थानांयशस्विनाम् ।
शुश्रूषैवतुशूद्रस्यधर्मोनैःश्रेयसःपरः ॥३३४॥
शुचिरुत्कृष्टशुश्रूषुर्मृदुवागनहंकृतः ।
ब्राह्मणाद्याश्रयोनित्यमुत्कृष्टांजातिमश्नुते ॥३३५॥
एषोऽनापदिवर्णानामुक्तःकर्मविधिःशुभः ।
आपद्यपिहियस्तेषांक्रमशस्तन्निबोधत ॥३३६॥

॥ इतिमानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायाम् ॥
॥ नवमोऽध्यायः ॥

॥ मानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायान्दशमोऽध्यायः ॥

अधीयीरंस्त्रयोवर्णाःस्वकर्म्मस्थाद्विजातयः ।
प्रब्रूयाद्ब्राह्मणस्त्वेषान्नेतरावितिनिश्चयः ॥१॥
सर्वेषाम्ब्राह्मणोविद्याद्वृत्त्युपायान्यथाविधि ।
प्रब्रूयादितरेभ्यश्चस्वयंचैवतथाभवेत् ॥२॥
वैशेष्यात्प्रकृतिश्रैष्ठ्यान्नियमस्यचधारणात् ।
संस्कारस्यविशेषाच्चवर्णानाम्ब्राह्मणःप्रभुः ॥३॥
ब्राह्मणःक्षत्रियोवैश्यस्त्रयोवर्णाद्विजातयः ।
चतुर्थएकजातिस्तुशूद्रोनास्तितुपंचमः ॥४॥
सर्ववर्णेषुतुल्यासुपत्नीष्वक्षतयोनिषु ।
आनुलोम्येनसम्भूताजात्याज्ञेयास्तएवते ॥५॥
स्त्रीष्वनन्तरजातासुद्विजैरुत्पादितान्सुतान् ।
सदृशानेवतानाहुर्मातृदोषविगर्हितान् ॥६॥
अनन्तरासुजातानांविधिरेषसनातनः ।
द्व्येकान्तरासुजातानान्धर्म्यंविद्यादिमंविधिम् ॥७॥

ब्राह्मणाद्वैश्यकन्यायामम्बष्ठोनामजायते ।
निषादःशूद्रकन्यायांयःपारशवउच्यते ॥८॥
क्षत्रियाच्छूद्रकन्यायांक्रूराचारविहारवान् ।
क्षत्रशूद्रवपुर्जन्तुरुग्रोनामप्रजायते ॥९॥
विप्रस्यत्रिषुवर्णेषुनृपतेर्वर्णयोर्द्वयोः ।
वैश्यस्यवर्णेचैकस्मिन्षडेतेऽपसदाःस्मृताः ॥१०॥
क्षत्रियाद्विप्रकन्यायांसूतोभवतिजातितः ।
वैश्यान्मागधवैदेहौराजविप्रांगनासुतौ ॥११॥
शूद्रादायोगवःक्षत्ताचण्डालश्चाधमोनृणाम् ।
वैश्यराजन्यविप्रासुजायन्तेवर्णसंकराः ॥१२॥
एकान्तरेत्वानुलोम्यादम्बष्ठोग्रौयथास्मृतौ ।
क्षत्तृवैदेहकौतद्वत्प्रातिलोम्येऽपिजन्मनि ॥१३॥
पुत्रायेऽनन्तरस्त्रीजाःक्रमेणोक्ताद्विजन्मनाम् ।
ताननन्तरनाम्नस्तुमातृदोषात्प्रचक्षते ॥१४॥
ब्राह्मणादुग्रकन्यायामावृतोनामजायते ।
आभीरोऽम्बष्ठकन्यायामायोगव्यान्तुधिग्वणः ॥१५॥
आयोगवश्चक्षत्ताचचण्डालश्चाधमोनृणाम् ।
प्रातिलोम्येनजायन्तेशूद्रादपसदास्त्रयः ॥१६॥

वैश्यान्मागधवैदेहौक्षत्रियात्सूतएवतु ।
प्रतीपमेतेजायन्तेपरेऽप्यपसदास्त्रयः ॥१७॥
जातोनिषादाच्छूद्रायांजात्याभवतिपुक्कसः ।
शूद्राज्जातोनिषाद्यान्तुसवैकुक्कुटकःस्मृतः ॥१८॥
क्षत्तुर्जातस्तथोग्रायांश्वपाकइतिकीर्त्यते ।
वैदेहकेनत्वम्बष्ठ्यामुत्पन्नोवेणउच्यते ॥१९॥
द्विजातयःसवर्णासुजनयन्त्यव्रतांस्तुयान् ।
तान्सावित्रीपरिभ्रष्टान्व्रात्यानितिविनिर्दिशेत् ॥२०॥
व्रात्यात्तुजायतेविप्रात्पापात्माभूर्जकण्टकः ।
आवन्त्यवाटधानौचपुष्पधःशैखएवच ॥२१॥
झल्लोमल्लश्चराजन्याद्व्रात्यान्निच्छिविरेवच ।
नटश्चकरणश्चैवखसोद्रविडएवच ॥२२॥
वैश्यात्तुजायतेव्रात्यात्सुधन्वाचार्य्यएवच ।
कारूषश्चविजन्माचमैत्रःसात्वतएवच ॥२३॥
व्यभिचारेणवर्णानामवेद्यावेदनेनच ।
स्वकर्मणांचत्यागेनजायन्तेवर्णसंकराः ॥२४॥
संकीर्णयोनयोयेतुप्रतिलोमानुलोमजाः ।
अन्योऽन्यव्यतिषक्ताश्चतान्प्रवक्ष्याम्यशेषतः ॥२५॥

सूतोवैदेहकश्चैवचण्डालश्चनराधमः ।
मागधःक्षत्तृजातिश्चतथाऽयोगवएवच ॥२६॥
एतेषट्सदृशान्वर्णान्जनयन्तिस्वयोनिषु ।
मातृजात्याम्प्रसूयन्तेप्रवरासुचयोनिषु ॥२७॥
यथात्रयाणांवर्णानान्द्वयोरात्मास्यजायते ।
आनन्तर्यात्स्वयोन्यान्तुतथावाह्येष्वपिक्रमात् ॥२८
तेचापिवाह्यान्सुबहूंस्ततोऽप्यधिकदूषितान् ।
परस्परस्यदारेषुजनयन्तिविगर्हितान् ॥२९॥
यथैवशूद्रोब्राह्मण्यांवाह्यंजन्तुम्प्रसूयते ।
तथावाह्यतरंवाह्यश्चातुर्वर्ण्येप्रसूयते ॥३०॥
प्रतिकूलंवर्त्तमानावाह्यावाह्यतरान्पुनः ।
हीनाहीनान्प्रसूयन्तेवर्णान्पंचदशैवतु ॥३१॥
प्रसाधनोपचारज्ञमदासन्दासजीवनम् ।
सैरिन्ध्रंवागुरावृत्तिंसूतेदस्युरयोगवे ॥३२॥
मैत्रेयकन्तुवैदेहोमाधूकंसम्प्रसूयते ।
नृन्प्रशंसत्यजस्रंयोघण्टाताडोऽरुणोदये ॥३३॥
निषादोमार्गवंसूतेदासन्नौकर्मजीविनम् ।
कैवर्त्तमितियम्प्राहुरार्यावर्त्तनिवासिनः ॥३४॥

मृतवस्त्रभृत्स्वनार्यासुगर्हितान्नाशनासुच ।
भवन्त्यायोगवीष्वेतेजातिहीनाःपृथक्त्रयः ॥३५॥
कारावरोनिषादात्तुचर्म्मकारःप्रसूयते ।
वैदेहिकादन्ध्रमेदौवहिर्ग्रामप्रतिश्रयौ ॥३६॥
चण्डालात्पाण्डुसोपाकस्त्वक्सारव्यवहारवान् ।
आहिण्डिकोनिषादेनवैदेह्यामेवजायते ॥३७॥
चण्डालेनतुसोपाकोमूलव्यसनवृत्तिमान् ।
पुक्कस्यांजायतेपापःसदासज्जनगर्हितः ॥३८॥
निषादस्त्रीतुचण्डालात्पुत्रमन्त्यावसायिनम् ।
श्मशानगोचरंसूतेवाह्यानामपिगर्हितम् ॥३९॥
संकरेजातयस्त्वेताःपितृमातृप्रदर्शिताः ।
प्रच्छन्नावाप्रकाशांवावेदितव्याःस्वकर्मभिः ॥४०॥
सजातिजानन्तरजाःषट्सुताद्विजधर्मिणः ।
शूद्राणान्तुसधर्माणःसर्वेऽपध्वंसजाःस्मृताः ॥४१॥
तपोवीजप्रभावैस्तुतेगच्छन्तियुगेयुगे ।
उत्कर्षंचापकर्षंचमनुष्येष्विहजन्मतः ॥४२॥
शनकैस्तुक्रियालोपादिमाःक्षत्रियजातयः ।
वृषलत्वंगतालोकेब्राह्मणादर्शनेनच ॥४३॥

पौण्ड्रकाश्चौड्रद्रविडाःकाम्बोजायवनाःशकाः ।
पारदापह्लवाश्चीनाःकिरातादरदाःखशाः ॥४४॥
मुखबाहूरूपज्जानांयालोकेजातयोवहिः ।
म्लेच्छवाचश्चार्य्यवाचःसर्वेतेदस्यवःस्मृताः ॥४५॥
येद्विजानामपसदायेचापध्वंसजाःस्मृताः ।
तेनिन्दितैर्वर्त्तयेयुर्द्विजानामेवकर्म्मभिः ॥४६॥
सूतानामश्वसारथ्यमम्बष्ठानांचिकित्सनम् ।
वैदेहकानांस्त्रीकार्य्यम्मागधानांवणिक्पथः ॥४७॥
मत्स्यघातोनिषादानान्त्वष्टिस्त्वायोगवस्यच ।
मेदान्ध्रचुंचुमद्गूनामारण्यपशुहिंसनम् ॥४८॥
क्षत्त्रुग्रपुक्कसानान्तुविलौकोबधबन्धनम् ।
धिग्वणानांचर्म्मकार्य्यंवेणानाम्भाण्डवादनम् ॥४९॥
चैत्यद्रुमश्मशानेषुशैलेषूपवनेषुच ।
वसेयुरेतेविज्ञानावर्त्तयन्तःस्वकर्म्मभिः ॥५०॥
चण्डालश्वपचानान्तुवहिर्ग्रामात्प्रतिश्रयः ।
अपपात्राश्चकर्त्तव्याधनमेषांश्वगर्दभम् ॥५१॥
वासांसिमृतचेलानिभिन्नभाण्डेषुभोजनम् ।
कार्ष्णायसमलंकारःपरिव्रज्याचनित्यशः ॥५२॥

नतैःसमयमन्विच्छेत्पुरुषोधर्ममाचरन् ।
व्यवहारोमिथस्तेषांविवाहःसदृशैःसह ॥५३॥
अन्नमेषाम्पराधीनन्देयंस्याद्भिन्नभाजने ।
रात्रौनविचरेयुस्तेग्रामेषुनगरेषुच ॥५४॥
दिवाचरेयुःकार्य्यार्थंचिह्निताराजशासनैः ।
अबान्धवंशवंचैवनिर्हरेयुरितिस्थितिः ॥५५॥
बध्यांश्चहन्युःसततंयथाशास्त्रंनृपाज्ञया ।
बध्यवासांसिगृह्णीयुःशय्याश्चाभरणानिच ॥५६॥
वर्णापेतमविज्ञातन्नरंकलुषयोनिजम् ।
आर्य्यरूपमिवानार्य्यंकर्म्मभिःस्वैर्विभावयेत् ॥५७॥
अनार्य्यतानिष्ठुरताक्रूरतानिष्क्रियात्मता ।
पुरुषंव्यंजयन्तीहलोकेकलुषयोनिजम् ॥५८॥
पित्र्यंवाभजतेशीलम्मातुर्वोभयमेववा ।
नकथंचनदुर्योनिःप्रकृतिंस्वान्नियच्छति ॥५९॥
कुलेमुख्येऽपिजातस्ययस्यस्याद्योनिसंकरः ।
संश्रयत्येवतच्छीलन्नरोऽल्पमपिवाबहु ॥६०॥
यत्रत्वेतेपरिध्वंसाजायन्तेवर्णदूषकाः ।
राष्ट्रिकैःसहतद्राष्ट्रंक्षिप्रमेवविनश्यति ॥६१॥

ब्राह्मणार्थेगवार्थेवादेहत्यागोऽनुपस्कृतः ।
स्त्रीबालाभ्युपपत्तौचवाह्यानांसिद्धिकारणम् ॥६२॥
अहिंसासत्यमस्तेयंशौचमिन्द्रियनिग्रहः ।
एतंसामासिकन्धर्मंचातुर्वर्ण्येऽब्रवीन्मनुः ॥६३॥
शूद्रायाम्ब्राह्मणाज्जातःश्रेयसाचेत्प्रजायते ।
अश्रेयाञ्छ्रेयसींजातिंगच्छत्यासप्तमाद्युगात् ॥६४॥
शूद्रोब्राह्मणतामेतिब्राह्मणश्चैतिशूद्रताम् ।
क्षत्रियाज्जातमेवन्तुविद्याद्वैश्यात्तथैवच ॥६५॥
अनार्यायांसमुत्पन्नोब्राह्मणात्तुयदृच्छया ।
ब्राह्मण्यामप्यनार्यात्तुश्रेयस्त्वंक्वेतिचेद्भवेत् ॥६६॥
जातोनार्य्यामनार्यायामार्य्यादार्योभवेद्गुणैः ।
जातोऽप्यनार्य्यादार्यायामनार्यइतिनिश्चयः ॥६७॥
तावुभावप्यसंस्कार्याविंतिधर्मोव्यवस्थितः ।
वैगुण्याज्जन्मनःपूर्वउत्तरःप्रतिलोमतः ॥६८॥
सुवीजंचैवसुक्षेत्रेजातंसम्पद्यतेयथा ।
तथार्य्याज्जातआर्यायांसर्वंसंस्कारमर्हति ॥६९॥
वीजमेकेप्रशंसन्तिक्षेत्रमन्येमनीषिणः ।
वीजक्षेत्रेतथैवान्येतत्रेयन्तुव्यवस्थितिः ॥७०॥

अक्षेत्रेबीजमुत्सृष्टमन्तरैवविनश्यति ।
अबीजकमपिक्षेत्रंकेवलंस्थण्डिलम्भवेत् ॥७१॥
यस्माद्बीजप्रभावेणतिर्य्यग्जाऋषयोऽभवन् ।
पूजिताश्चप्रशंस्ताश्चतस्माद्बीजम्प्रशस्यते ॥७२॥
अनार्य्यमार्यकर्म्माणमार्य्यंचानार्य्यकर्म्मिणम् ।
सम्प्रधार्य्याब्रवीद्धातानसमौनासमाविति ॥७३॥
ब्राह्मणाब्रह्मयोनिस्थायेस्वकर्मण्यवस्थिताः ।
तेसम्यगुपजीवेयुःषट्कर्माणियथाक्रमम् ॥७४॥
अध्यापनमध्ययनंयजनंयाजनन्तथा ।
दानम्प्रतिग्रहश्चैवषट्कर्माण्यग्रजन्मनः ॥७५॥
षणान्तुकर्म्मणामस्यत्रीणिकर्माणिजीविका ।
याजनाध्यापनेचैवविशुद्धाच्चप्रतिग्रहः ॥७६॥
त्रयोधर्मानिवर्त्तन्तेब्राह्मणात्क्षत्रियम्प्रति ।
अध्यापनंयाजनंचतृतीयश्चप्रतिग्रहः ॥७७॥
वैश्यम्प्रतितथैवैतेनिवर्त्तेरन्निितिस्थितिः ।
नतौप्रतिहितान्धर्म्मान्मनुराहप्रजापतिः ॥७८॥
शस्त्रास्त्रभृत्त्वंक्षत्रस्यवणिक्पशुकृषिर्विशः ।
आजीवनार्थन्धर्म्मस्तुदानमध्ययनंयजिः ॥७९॥

वेदाभ्यासोब्राह्मणस्यक्षत्रियस्यचरक्षणम् ।
वार्त्ताकर्मैववैश्यस्यविशिष्टानिस्वकर्मसु ॥८०॥
अजीवंस्तुयथोक्तेनब्राह्मणःस्वेनकर्मणा ।
जीवेत्क्षत्रियधर्म्मेणसह्यस्यप्रत्यनन्तरः ॥८१॥
उभाभ्यामप्यजीवंस्तुकथंस्यादितिचेद्भवेत् ।
कृषिगोरक्षमास्थायजीवेद्वैश्यस्यजीविकाम् ॥८२॥
वैश्यवृत्त्याऽपिजीवंस्तुब्राह्मणःक्षत्रियोऽपिवा ।
हिंसाप्रायाम्पराधीनांकृषिंयत्नेनवर्जयेत् ॥८३॥
कृषिंसाध्वितिमन्यन्तेसावृत्तिःसद्विगर्हिता ।
भूमिम्भूमिशयांश्चैवहन्तिकाष्ठमयोमुखम् ॥८४॥
इदन्तुवृत्तिवैकल्यात्त्यजतोधर्मनैपुणम् ।
विट्पण्यमुद्धृतोद्धारंविक्रेयंवित्तवर्द्धनम् ॥८५॥
सर्वान्रसानपोहेतकृतान्नंचतिलैःसह ।
अश्मनोलवणंचैवपशवोयेचमानुषाः ॥८६॥
सर्वंचतान्तवंरक्तंशाणक्षौमाविकानिच ।
अपिचेत्स्युररक्तानिफलमूलेतथौषधीः ॥८७॥
अपःशस्त्रंविषम्मांसंसोमंगन्धांश्चसर्वशः ।
क्षीरंक्षौद्रन्दधिघृतन्तैलम्मधुगुडंकुशान् ॥८८॥

आरण्यांश्चपशून्सर्वान्दंष्ट्रिणश्चवयांसिच ।
मद्यन्नीलिंचलाक्षांचसर्वांश्चैकशफांस्तथा ॥८९॥
काममुत्पाद्यकृष्यातुस्वयमेवकृषीबलः ।
विक्रीणीततिलाञ्छुद्धान्धर्मार्थमचिरस्थितान् ॥९०॥
भोजनाभ्यंजनाद्दानाद्यदन्यत्कुरुतेतिलैः ।
कृमिभूतःश्वविष्ठायाम्पितृभिःसहमज्जति ॥९१॥
सद्यःपततिमांसेनलाक्षयालवणेनच ।
त्र्यहेणशूद्रीभवतिब्राह्मणःक्षीरविक्रयात् ॥९२॥
इतरेषान्तुपण्यानांविक्रयादिहकामतः ।
ब्राह्मणःसप्तरात्रेणवैश्यभावन्नियच्छति ॥९३॥
रसारसैर्निमातव्यानत्वेवलवणंरसैः ।
कृतान्नंचाकृतान्नेनतिलाधान्येनतत्समाः ॥९४॥
जीवेदेतेनराजन्यःसर्वेणाप्यनयंगतः ।
नत्वेवज्यायसींवृत्तिमभिमन्येतकर्हिचित् ॥९५॥
योलोभादधमोजात्याजीवेदुत्कृष्टकर्म्मभिः ।
तंराजानिर्धनंकृत्वाक्षिप्रमेवप्रवासयेत् ॥९६॥
वरंस्वधर्मोविगुणोनपारक्यःस्वनुष्ठितः ।
परधर्म्मेणजीवन्हिसद्यःपततिजातितः ॥९७॥

वैश्योऽजीवन्स्वधर्मेणशूद्रवृत्त्याऽपिवर्त्तयेत् ।
अनाचरन्नकार्य्याणिनिवर्त्तेतचशक्तिमान् ॥९८॥
अशक्नुवंस्तुशुश्रूषांशूद्रःकर्त्तुंद्विजन्मनाम् ।
पुत्रदारात्ययम्प्राप्तोजीवेत्कारुककर्मभिः ॥९९॥
यैःकर्म्मभिःप्रचरितैःशुश्रूषन्तेद्विजातयः ।
तानिकारुककर्माणिशिल्पानिविविधानिच ॥१००॥
वैश्यवृत्तिमनातिष्ठन्ब्राह्मणःस्वेपथिस्थितः ।
अवृत्तिकर्षितःसीदन्निमन्धर्मंसमाचरेत् ॥१०१॥
सर्वतःप्रतिगृह्णीयाद्ब्राह्मणस्त्वनयंगतः ।
पवित्रन्दुष्यतीत्येतद्धर्मतोनोपपद्यते ॥१०२॥
नाध्यापनाद्याजनाद्वागर्हिताद्वाप्रतिग्रहात् ।
दोषोभवतिविप्राणांज्वलनाम्बुसमाहिते ॥१०३॥
जीवितात्ययमापन्नोयोऽन्नमत्तियतस्ततः ।
आकाशमिवपंकेननसपापेनलिप्यते ॥१०४॥
अजीगर्त्तःसुतंहन्तुमुपासर्पद्बुभुक्षितः ।
नचालिप्यतपापेनक्षुत्प्रतीकारमाचरन् ॥१०५॥
श्वमांसमिच्छन्नार्त्तोऽत्तुन्धर्माधर्मविचक्षणः ।
प्राणानाम्परिरक्षार्थंवामदेवोनलिप्तवान् ॥१०६॥

भरद्वाजःक्षुधार्त्तस्तुसपुत्रोविजनेवने ।
बह्वीर्गाःप्रतिजग्राहवृधोस्तक्ष्णोमहातपाः ॥१०७॥
क्षुधार्त्तश्चात्तुमभ्यागाद्विश्वामित्रःश्वजाघनीम् ।
चण्डालहस्तादादायधर्माधर्मविचक्षणः ॥१०८॥
प्रतिग्रहाद्याजनाद्वातथैवाध्यापनादपि ।
प्रतिग्रहःप्रत्यवरःप्रेत्यविप्रस्यगर्हितः ॥१०९॥
याजनाध्यापनेनित्यंक्रियेतेसंस्कृतात्मनाम् ।
प्रतिग्रहस्तुक्रियतेशूद्रस्यप्यन्त्यजन्मनः ॥११०॥
जपहोमैरपैत्येनोयाजनाध्यापनैःकृतम् ।
प्रतिग्रहनिमित्तन्तुत्यागेनतपसैवच ॥१११॥
शिलोञ्छमप्याददीतविप्रोऽजीवन्यतस्ततः ।
प्रतिग्रहाच्छिलःश्रेयांस्ततोऽप्युञ्छःप्रशस्यते ॥११२॥
सीदद्भिःकुप्यमिच्छद्भिर्धनंवापृथिवीपतिः ।
याच्यःस्यात्स्नातकैर्विप्रैरदित्संस्त्यागमर्हति ॥११३॥
अकृतंचकृतात्क्षेत्राद्गौरजाविकमेवच ।
हिरण्यन्धान्यमन्नंचपूर्वम्पूर्वमदोषवत् ॥११४॥
सप्तवित्तागमाधर्म्यादायोलाभःक्रयोजयः ।
प्रयोगःकर्मयोगश्चसत्प्रतिग्रहएवच ॥११५॥

विद्याशिल्पम्भृतिःसेवागोरक्ष्यंविपणिःकृषिः ।
धृत्तिर्भैक्षंकुसीदंचदशजीवनहेतवः ॥११६॥
ब्राह्मणःक्षत्रियोवाऽपिवृद्धिन्नैवप्रयोजयेत् ।
कामन्तुखलुधर्मार्थन्दद्यात्पापीयसेऽल्पिकाम् ॥११७॥
चतुर्थमाददानोऽपिक्षत्रियोभागमापदि ।
प्रजारक्षन्परंशक्त्याकिल्विषात्प्रतिमुच्यते ॥११८॥
स्वधर्मोविजयस्तस्यनाहवेस्यात्पराङ्मुखः ।
शस्त्रेणवैश्यान्रक्षित्वाधर्म्यमाहारयेद्बलिम् ॥११९॥
धान्येऽष्टमंविंशंशुल्कंविंशंकार्षापणावरम् ।
कर्मोपकरणाःशूद्राःकारवःशिल्पिनस्तथा ॥१२०॥
शूद्रस्तुवृत्तिमाकांक्षन्क्षत्रमाराधयेद्यदि ।
धनिनंवाऽप्युपाराध्यवैश्यंशूद्रोजिजीविषेत ॥१२१॥
स्वर्गार्थमुभयार्थंवाविप्रानाराधयेत्तुसः ।
जातब्राह्मणशब्दस्यसाह्यस्यकृतकृत्यता ॥१२२॥
विप्रसेवैवशूद्रस्यविशिष्टंकर्मकीर्त्यते ।
यदतोऽन्यद्धिकुरुतेतद्भवत्यस्यनिष्फलम् ॥१२३॥
प्रकल्प्यातस्यतैर्वृत्तिःस्वकुटुम्बाद्यथार्हतः ।
शक्तिंचावेक्ष्यदाक्ष्यंचभृत्यानांचपरिग्रहम् ॥१२४॥

उच्छिष्टमन्नन्दातव्यंजीर्णानिवसनानिच ।
पुलाकाश्चैवधान्यानांजीर्णाश्चैवपरिच्छदाः ॥१२५॥
नशूद्रेपातकंकिंचिन्नचसंस्कारमर्हति ।
नास्याधिकारोधर्मेऽस्तिनधर्मात्प्रतिषेधनम् ॥१२६॥
धर्मेप्सवस्तुधर्मज्ञाःसतांवृत्तमनुष्ठिताः ।
मंत्रवर्ज्जन्नदुष्यन्तिप्रशंसाम्प्राप्नुवन्तिच ॥१२७॥
यथायथाहिसद्वृत्तमातिष्ठत्यनसूयकः ।
तथातथेमंचामुंचलोकम्प्राप्नोत्यनिन्दितः ॥१२८॥
शक्तेनापिहिशूद्रेणनकार्य्योधनसंचयः ।
शूद्रोहिधनमासाद्यब्राह्मणानेवबाधते ॥१२९॥
एतेचतुर्णांवर्णानामापद्धर्माःप्रकीर्त्तिताः ।
यान्सम्यगनुतिष्ठन्तोव्रजन्तिपरमांगतिम् ॥१३०॥
एषधर्मविधिःकृत्स्नश्चातुर्वर्ण्यस्यकीर्त्तितः ।
अतःपरम्प्रवक्ष्यामिप्रायश्चित्तविधिंशुभम् ॥१३१॥

---

॥ इतिमानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायाम् ॥
॥ दशमोऽध्यायः ॥

---

॥ मानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायांएकादशोऽध्यायः ॥

सान्तानिकंयक्ष्यमाणमध्वगंसार्ववेदसम् ।
गुर्वर्थम्पितृमात्रर्थंस्वाध्यायार्थ्युपतापिनः ॥१॥
नवैतान्स्नातकान्विद्याद्ब्राह्मणान्धर्मभिक्षुकान् ।
निःस्वेभ्योदेयमेतेभ्योदानंविद्याविशेषतः ॥२॥
एतेभ्योहिद्विजाग्र्येभ्योदेयमन्नंसदक्षिणम् ।
इतरेभ्योवहिर्वेदिकृतान्नन्देयमुच्यते ॥३॥
सर्वरत्नानिराजातुयथार्हम्प्रतिपादयेत् ।
ब्राह्मणान्वेदविदुषोयज्ञार्थंचैवदक्षिणाम् ॥४॥
कृतदारोऽपरान्दारान्भिक्षित्वायोऽधिगच्छति
रतिमात्रम्फलन्तस्यद्रव्यदातुस्तुसन्ततिः ॥५॥
धनानितुयथाशक्तिविप्रेषुप्रतिपादयेत् ।
वेदवित्सुविविक्तेषुप्रेत्यस्वर्गंसमश्नुते ॥६॥
यस्यत्रैवार्षिकम्भक्तम्पर्य्याप्तम्भृत्यवृत्तये ।
अधिकंवाऽपिविद्येतससोमम्पातुमर्हति ॥७॥

अतःस्वल्पीयसिद्रव्येयःसोमम्पिवतिद्विजः ।
सपीतसोमपूर्वोऽपिनतस्याप्नोतितत्फलम् ॥८॥
शक्तःपरजनेदातास्वजनेदुःखजीविनि ।
मध्वापातोविषास्वादःसधर्मप्रतिरूपकः ॥९॥
भृत्यानामुपरोधेनयत्करोत्यौर्द्ध्वदेहिकम् ।
तद्भवत्यसुखोदर्कंजीवतश्चमृतस्यच ॥१०॥
यज्ञश्चेत्प्रतिरुद्धःस्यादेकेनांगेनयज्वनः ।
ब्राह्मणस्यविशेषेणधार्मिकेसतिराजनि ॥११॥
योवैश्यःस्याद्बहुपशुर्हीनक्रतुरसोमपः ।
कुटुम्बात्तस्यतद्द्रव्यमाहरेद्यज्ञसिद्धये ॥१२॥
आहरेत्त्रीणिवाद्वेवाकामंशूद्रस्यवेश्मनः ।
नहिशूद्रस्ययज्ञेषुकश्चिदस्तिपरिग्रहः ॥१३॥
योऽनाहिताग्निःशतगुरयज्वाचसहस्रगुः ।
तयोरपिकुटुम्बाभ्यामाहरेदविचारयन् ॥१४॥
आदाननित्याच्चादातुराहरेदप्रयच्छतः ।
तथायशोऽस्यप्रथतेधर्म्मश्चैवप्रवर्द्धते ॥१५॥
तथैवसप्तमेभक्तेभक्तानिषडनश्नता ।
अश्वस्तनविधानेनहर्त्तव्यंहीनकर्म्मणः ॥१६॥

खलात्क्षेत्रादगाराद्वायतोवाऽप्युपलभ्यते ।
आख्यातव्यन्तुतत्तस्मैपृच्छतेयदिपृच्छति ॥१७॥
ब्राह्मणस्वंनहर्त्तव्यंक्षत्रियेणकदाचन ।
दस्युनिष्क्रिययोस्तुस्वमजीवन्हर्त्तुमर्हति ॥१८॥
योऽसाधुभ्योऽर्थमादायसाधुभ्यःसम्प्रयच्छति ।
सकृत्वाप्लवमात्मानंसन्तारयतिताबुभौ ॥१९॥
यज्ञनंयज्ञशीलानान्देवस्वन्तद्विदुर्बुधाः ।
अयज्वनान्तुयद्वित्तमासुरस्वन्तदुच्यते ॥२०॥
नतस्मिन्धारयेद्दण्डन्धार्म्मिकःपृथिवीपतिः ।
क्षत्रियस्यहिबालिश्याद्ब्राह्मणःसीदतिक्षुधा ॥२१॥
तस्यभृत्यजनंज्ञात्वास्वकुटुम्बान्महीपतिः ।
श्रुतशीलेचविज्ञायवृत्तिन्धर्म्याम्प्रकल्पयेत् ॥२२॥
कल्पयित्वाऽस्यवृत्तिंचरक्षेदेनंसमन्ततः ।
राजाहिधर्म्मषड्भागन्तस्मात्प्राप्नोतिरक्षितात् ॥२३॥
नयज्ञार्थन्धनंशूद्राद्विप्रोभिक्षेतकर्हिचित् ।
यजमानोहिभिक्षित्वाचण्डालःप्रेत्यजायते ॥२४॥
यज्ञार्थमर्थम्भिक्षित्वायोनसर्वम्प्रयच्छति ।
सयातिभासतांविप्रःकाकतांवाशतंसमाः ॥२५॥

देवस्वम्ब्राह्मणस्वंवालोभेनोपहिनस्तियः ।
सपापात्मापरेलोकेगृध्रोच्छिष्टेनजीवति ॥२६॥
इष्टिंवैश्वानरींनित्यन्निर्वपेदब्दपर्य्यये ।
कॢप्तानाम्पशुसोमानान्निष्कृत्यर्थमसम्भवे ॥२७॥
आपत्कल्पेनयोधर्म्मंकुरुतेऽनापदिद्विजः ।
सनाप्नोतिफलन्तस्यपरत्रेतिविचारितम् ॥२८॥
विश्वैश्चदेवैःसाध्यैश्चब्राह्मणैश्चमहर्षिभिः ।
आपत्सुमरणाद्भीतैर्विधेःप्रतिनिधिःकृतः ॥२९॥
प्रभुःप्रथमकल्पस्ययोऽनुकल्पेनवर्त्तते ।
नसाम्परायिकन्तस्यदुर्म्मतेर्विद्यतेफलम् ॥३०॥
नब्राह्मणोवेदयेतकिंचिद्राजनिधर्मवित् ।
स्ववीर्य्येणैवताञ्छिष्यान्मानवानपकारिणः ॥३१॥
स्ववीर्य्याद्राजवीर्य्याच्चस्ववीर्य्यम्बलवत्तरम् ।
तस्मात्स्वेनैववीर्य्येणनिगृह्णीयादरीन्द्विजः ॥३२॥
श्रुतीरथर्वाङ्गिरसीःकुर्य्यादित्यविचारयन् ।
वाक्शस्त्रंवैब्राह्मणस्यतेनहन्यादरीन्द्विजः ॥३३॥
क्षत्रियोबाहुवीर्य्येणतरेदापदमात्मनः ।
धनेनवैश्यशूद्रौतुजपहोमैर्द्विजोत्तमः ॥३४॥

विधाताशासितावक्तामैत्रोब्राह्मणउच्यते ।
तस्मैनाकुशलम्ब्रूयान्नशुष्कांगिरमीरयेत् ॥३५॥
नवैकन्यानयुवतिर्नाल्पविद्योनबालिशः ।
होतास्यादग्निहोत्रस्यनार्त्तोनासंस्कृतस्तथा ॥३६॥
नरकेहिपतन्त्येतेजुह्वतःसचयस्यतत् ।
तस्माद्वैतानकुशलोहोतास्याद्वेदपारगः ॥३७॥
प्राजापत्यमदत्वाश्वमग्न्याधेयस्यदक्षिणाम् ।
अनाहिताग्निर्भवतिब्राह्मणोविभवेसति ॥३८॥
पुण्यान्यन्यानिकुर्वीतश्रद्दधानोजितेन्द्रियः ।
नत्वल्पदक्षिणैर्यज्ञैर्यजेतेहकथंचन ॥३९॥
इन्द्रियाणियशःस्वर्गमायुःकीर्तिम्प्रजाःपशून् ।
हन्त्यल्पदक्षिणोयज्ञस्तस्मान्नाल्पधनोयजेत् ॥४०॥
अग्निहोत्र्यपविध्याग्नीन्ब्राह्मणःकामकारतः ।
चान्द्रायणंचरेन्मासंवीरहत्यासमंहितत् ॥४१॥
येशूद्रादधिगम्यार्थमग्निहोत्रमुपासते ।
ऋत्विजस्तेहिशूद्राणाम्ब्रह्मवादिषुगर्हिताः ॥४२॥
तेषांसततमज्ञानांवृषलाग्न्युपसेविनाम् ।
पदामस्तकमाक्रम्यदातादुर्गाणिसन्तरेत् ॥४३॥

अकुर्वन्विहितंकर्मनिन्दितंचसमाचरन् ।
प्रसक्तश्चेन्द्रियार्थेषुप्रायश्चित्तीयतेनरः ॥४४॥
अकामतःकृतेपापेप्रायश्चित्तंविदुर्बुधाः ।
कामकारकृतेऽप्याहुरेकेश्रुतिनिदर्शनात् ॥४५॥
अकामतःकृतम्पापंवेदाभ्यासेनशुध्यति ।
कामतस्तुकृतम्मोहात्प्रायश्चित्तैःपृथग्विधैः ॥४६॥
प्रायश्चित्तीयताम्प्राप्यदैवात्पूर्वकृतेनवा ।
नसंसर्गंव्रजेत्सद्भिःप्रायश्चित्तेऽकृतेद्विजः ॥४७॥
इहदुश्चरितैःकेचित्केचित्पूर्वकृतैस्तथा ।
प्राप्नुवन्तिदुरात्मानोनराऱूपविपर्ययम् ॥४८॥
सुवर्णचौरःकौनख्यंसुरापःश्यावदन्तताम् ।
ब्रह्महाक्षयरोगित्वन्दौश्चर्म्यंगुरुतल्पगः ॥४९॥
पिशुनःपौतिनासिक्यंसूचकःपूतिवक्त्रताम् ।
धान्यचौरोऽङ्गहीनत्वमातिरैक्यन्तुमिश्रकः ॥५०॥
अन्नहर्तामयावित्वम्मौक्यंवागपहारकः ।
वस्त्रापहारकःश्वैत्र्यम्पंगुतामश्वहारकः ॥५१॥
एवंकर्मविशेषेणजायन्तेसद्विगर्हिताः ।
जडमूकान्धबधिराविकृताकृतयस्तथा ॥५२॥

चरितव्यमतोनित्यम्प्रायश्चित्तंविशुद्धये ।
निन्द्यैर्हिलक्षणैर्युक्ताजायन्तेऽनिष्कृतैनसः ॥५३॥
ब्रह्महत्यासुरापानंस्तेयंगुर्वंगनागमः ।
महान्तिपातकान्याहुःसंसर्गश्चापितैःसह ॥५४॥
अनृतंचसमुत्कर्षेराजगामिचपैशुनम् ।
गुरोश्चालीकनिर्बन्धःसमानिब्रह्महत्यया ॥५५॥
ब्रह्मोज्झतावेदनिन्दाकौटसाक्ष्यंसुहृद्बधः ।
गर्हितानाद्ययोर्जग्धिःसुरापानसमानिषट् ॥५६॥
निक्षेपस्यापहरणंनराश्वरजतस्यच ।
भूमिवज्रमणीनांचरुक्मस्तेयसमंस्मृतम् ॥५७॥
रेतःसेकःस्वयोनीषुकुमारीष्वन्त्यजासुच ।
सख्युःपुत्रस्यचस्त्रीषुगुरुतल्पसमंविदुः ॥५८॥
गोबधोऽयाज्यसंयाज्यंपारदार्यात्मविक्रयम् ।
गुरुमातृपितृत्यागःस्वाध्यायाग्न्योःसुतस्यच ॥५९॥
परिवित्तिताऽनुजेनपरिवेदनमेवच ।
तयोर्दानंचकन्यायास्तयोरेवचयाजनम् ॥६०॥
कन्यायादूषणंचैववार्धुष्यंव्रतलोपनम् ।
तडागारामदाराणामपत्यस्यचविक्रयः ॥६१॥

व्रात्यताबान्धवत्यागोभृत्याध्यापनमेवच ।
भृताच्चाध्ययनादानमपण्यानांचविक्रयः ॥६२॥
सर्वाकरेष्वधीकारोमहायंत्रप्रवर्त्तनम् ।
हिंसौषधीनांस्त्र्याजीवोऽभिचारोमूलकर्मच ॥६३॥
इन्धनार्थमशुष्काणान्द्रुमाणामवपातनम् ।
आत्मार्थंचक्रियारम्भोनिन्दितान्नादनन्तथा ॥६४॥
अनाहिताग्नितास्तेयमृणानामनपक्रिया ।
असच्छास्त्राधिगमनंकौशीलव्यस्यचक्रिया ॥६५॥
धान्यकुप्यपशुस्तेयम्मद्यपस्त्रीनिषेवणम् ।
स्त्रीशूद्रविट्क्षत्रवधोनास्तिक्यंचोपपातकम् ॥६६॥
ब्राह्मणस्यरुजःकृत्याघ्रातिरघ्रेयमद्ययोः ।
जैह्म्यंचमैथुनम्पुंसिजातिभ्रंशकरंस्मृतम् ॥६७॥
खराश्वोष्ट्रमृगेभानामजाविकबधस्तथा ।
संकरीकरणंज्ञेयम्मीनाहिमहिषस्यच ॥६८॥
निन्दितेभ्योधनादानंवाणिज्यंशूद्रसेवनम् ।
अपात्रीकरणंज्ञेयमसत्यस्यचभाषणम् ॥६९॥
कृमिकीटवयोहत्यामद्यानुगतभोजनम् ।
फलैधःकुसुमस्तेयमधैर्यंचमलावहम् ॥७०॥

एतान्येनांसिसर्वाणियथोक्तानिपृथक्पृथक् ।
यैर्यैर्व्रतैरपोह्यन्तेतानिसम्यङ्निबोधत ॥७१॥
ब्रह्महाद्वादशसमाःकुटींकृत्वावनेवसेत् ।
भैक्षाश्यात्मविशुद्ध्यर्थंकृत्वाशवशिरोध्वजम् ॥७२॥
लक्ष्यंशस्त्रभृतांवास्याद्विदुषामिच्छयात्मनः ।
प्रास्येदात्मानमग्नौवासमिद्धेत्रिरवाक्शिराः ॥७३॥
यजेतवाऽश्वमेधेनस्वर्जितागोसवेनवा ।
अभिजिद्विश्वजिद्भ्यांवात्रिवृताग्निष्टुताऽपिवा ॥७४॥
जपन्वाऽन्यतमंवेदंयोजनानांशतंव्रजेत् ।
ब्रह्महत्याऽपनोदायमितभुङ्नियतेन्द्रियः ॥७५॥
सर्वस्वंवेदविदुषेब्राह्मणायोपपादयेत् ।
धनंवाजीवनायालंगृहंवासपरिच्छदम् ॥७६॥
हविष्यभुग्वाऽनुसरेत्प्रतिस्रोतःसरस्वतीम् ।
जपेद्वानियताहारस्त्रिर्वैवेदस्यसंहिताम् ॥७७॥
कृतवापनोनिवसेद्ग्रामान्तेगोव्रजेऽपिवा ।
आश्रमेवृक्षमूलेवागोब्राह्मणहितेरतः ॥७८॥
ब्राह्मणार्थेगवार्थेवासद्यःप्राणान्परित्यजेत् ।
मुच्यतेब्रह्महत्यायागोप्तागोब्राह्मणस्यच ॥७९॥

अथवरम्प्रतिरोद्धावासर्वस्वमवजित्यवा ।
विप्रस्यतन्निमित्तेवाप्राणालाभेविमुच्यते ॥८०॥
एवंदृढव्रतोनित्यम्ब्रह्मचारीसमाहितः ।
समाप्तेद्वादशेवर्षेब्रह्महत्यांव्यपोहति ॥८१॥
शिष्ट्वावाभूमिदेवानान्नरदेवसमागमे ।
स्वमेनोऽवभृथस्नातोहयमेधेविमुच्यते ॥८२॥
धर्मस्यब्राह्मणोमूलमग्रंराजन्यउच्यते ।
तस्मात्समागमेतेषामेनोविख्याप्यशुध्यति ॥८३॥
ब्राह्मणःसम्भवेनैवदेवानामपिदैवतम् ।
प्रमाणंचैवलोकस्यब्रह्मात्रैवहिकारणम् ॥८४॥
तेषांवेदविदोब्रूयुस्त्रयोऽप्येनःसुनिष्कृतिम् ।
सातेषाम्पावनायस्यात्पवित्राविदुषांहिवाक् ॥८५॥
अतोऽन्यतममास्थायविधिंविप्रःसमाहितः ।
ब्रह्महत्याकृतम्पापंव्यपोहत्यात्मवत्तया ॥८६॥
हत्वागर्भमविज्ञातमेतदेवव्रतंचरेत् ।
राजन्यवैश्यौचेजानावात्रेयीमेवचस्त्रियम् ॥८७॥
उक्त्वाचैवानृतंसाक्ष्येप्रतिरुध्यगुरुन्तथा ।
अपहृत्यचनिक्षेपंकृत्वाचस्त्रीसुहृद्वधम् ॥८८॥

इयंविशुद्धिरुदिताप्रमाप्याकामतोद्विजम् ।
कामतोब्राह्मणबधेनिष्कृतिर्नविधीयते ॥८९॥
सुराम्पीत्वाद्विजोमोहादग्निवर्णांसुराम्पिवेत् ।
तयासकायेनिर्दग्धेमुच्यतेकिल्विषात्ततः ॥९०॥
गोमूत्रमग्निवर्णंवापिवेदुदकमेववा ।
पयोघृतंवामरणाद्गोशकृद्रसमेववा ॥९१॥
कणान्वाभक्षयेदब्दम्पिण्याकंवासकृन्निशि ।
सुरापानापनुत्त्यर्थंबालवासाजटीध्वजी ॥९२॥
सुरावैमलमन्नानाम्पाप्माचमलमुच्यते ।
तस्माद्ब्राह्मणराजन्यौवैश्यश्चनसुराम्पिवेत् ॥९३॥
गौडीपैष्टीचमाध्वीचविज्ञेयात्रिविधासुरा ।
यथैवैकातथासर्वानपातव्याद्विजोत्तमैः ॥९४॥
यक्षरक्षःपिशाचान्नम्मद्यम्मांसंसुरासवम् ।
तद्ब्राह्मणेननात्तव्यन्देवानामश्नताहविः ॥९५॥
अमेध्येवापतेन्मत्तोवैदिकंवाऽप्युदाहरेत् ।
अकार्य्यमन्यत्कुर्य्याद्वाब्राह्मणोमदमोहितः ॥९६॥
यस्यकायगतम्ब्रह्ममद्येनाप्लाव्यतेसकृत् ।
तस्यव्यपैतिब्राह्मण्यंशूद्रत्वंचसगच्छति ॥९७॥

एषाविचित्राऽभिहितासुरापानस्यनिष्कृतिः ।
अतऊर्द्ध्वम्प्रवक्ष्यामिसुवर्णस्तेयनिष्कृतिम् ॥९८॥
सुवर्णस्तेयकृद्विप्रोराजानमभिगम्यतु ।
स्वकर्म्मख्यापयन्ब्रूयान्माम्भवाननुशास्त्विति ॥९९॥
गृहीत्वामुसलंराजासकृद्धन्यात्तुतंस्वयम् ।
बधेनशुध्यतिस्तेनोब्राह्मणस्तपसैवतु ॥१००॥
तपसाऽपनुनुत्सुस्तुसुवर्णस्तेयजम्मलम् ।
चीरवासाद्विजोऽरण्येचरेद्ब्रह्महणोव्रतम् ॥१०१॥
एतैर्व्रतैरपोहेतपापंस्तेयकृतन्द्विजः ।
गुरुस्त्रीगमनीयन्तुव्रतैरेभिरपानुदेत् ॥१०२॥
गुरुतल्प्यभिभाष्यैनस्तप्तेस्वप्यादयोमये ।
सूर्मींज्वलन्तींस्वाश्लिष्येन्मृत्युनासविशुध्यति ॥१०३॥
स्वयंवाशिश्नवृषणावुत्कृत्याधायचांजलौ ।
नैर्ऋतीन्दिशमातिष्ठेदानिपातादजिह्मगः ॥१०४॥
खट्वांगीचीरवासावाश्मश्रुलोविजनेवने ।
प्राजापत्यंचरेत्कृच्छ्रमब्दमेकंसमाहितः ॥१०५॥
चान्द्रायणंवात्रीन्मासानभ्यस्येन्नियतेन्द्रियः ।
हविष्येणयवाग्वावागुरुतल्पापनुत्तये ॥१०६॥

एतैर्व्रतैरपोहेयुर्महापातकिनोमलम् ।
उपपातकिनस्त्वेवमेभिर्नानाविधैर्व्रतैः ॥१०७॥
उपपातकसंयुक्तोगोघ्नोमासंयवान्पिवेत् ।
कृतवापोवसेद्गोष्ठेचर्म्मणातेनसंवृतः ॥१०८॥
चतुर्थकालमश्नीयादक्षारलवणम्मितम् ।
गोमूत्रेणाचरेत्स्नानन्द्वौमासौनियतेन्द्रियः ॥१०९॥
दिवाऽनुगच्छेद्गास्तास्तुतिष्ठन्नूर्द्ध्वंरजःपिवेत् ।
शुश्रूषित्वानमस्कृत्यरात्रौवीरासनंवसेत् ॥११०॥
तिष्ठन्तीष्वनुतिष्ठेत्तुव्रजन्तीष्वप्यनुव्रजेत् ।
आसीनासुतथासीनोनियतोवीतमत्सरः ॥१११॥
आतुरामभिशस्तांवाचौरव्याघ्रादिभिर्भयैः ।
पतिताम्पंकलग्नांवासर्वोपायैर्विमोचयेत् ॥११२॥
उष्णेवर्षतिशीतेवामारुतेवातिवाभृशम् ।
नकुर्वीतात्मनस्त्राणंगोरकृत्वातुशक्तितः ॥११३॥
आत्मनोयदिवाऽन्येषांगृहेक्षेत्रेऽथवाखले ।
भक्षयन्तीन्नकथयेत्पिवन्तंचैववत्सकम् ॥११४॥
अनेनविधिनायस्तुगोघ्नोगामनुगच्छति ।
सगोहत्याकृतम्पापंत्रिभिर्मासैर्व्यपोहति ॥११५॥

वृषभैकादशागाश्चदद्यात्सुचरितव्रतः ।
अविद्यमानेसर्वस्वंवेदविद्भ्योनिवेदयेत् ॥११६॥
एतदेवव्रतंकुर्य्युरुपपातकिनोद्विजाः ।
अवकीर्णिवर्ज्जंशुद्ध्यर्थंचान्द्रायणमथापिवा ॥११७॥
अवकीर्णीतुकाणेनगर्दभेनचतुष्पथे ।
पाकयज्ञविधानेनयजेतनिर्ऋतिन्निशि ॥११८॥
हुत्वाऽग्नौविधिवद्धोमानन्ततश्चसमित्यृचा ।
वातेन्द्रगुरुवह्नीनांजुहुयात्सर्पिषाहुतीः ॥११९॥
कामतोरेतसःसेकंव्रतस्थस्यद्विजन्मनः ।
अतिक्रमंव्रतस्याहुर्धर्म्मज्ञाब्रह्मवादिनः ॥१२०॥
मारुतम्पुरुहूतंचगुरुम्पावकमेवच ।
चतुरोव्रतिनोऽभ्येतिब्राह्मन्तेजोऽवकीर्णिनः ॥१२१॥
एतस्मिन्नेनसिप्राप्तेवसित्वागर्द्दभाजिनम् ।
सप्तागारांश्चरेद्भैक्षंस्वकर्म्मपरिकीर्त्तयन् ॥१२२॥
तेभ्योलब्धेनभैक्षेणवर्त्तयन्नेककालिकम् ।
उपस्पृशंस्त्रिषवणत्वब्देनसविशुध्यति ॥१२३॥
जातिभ्रंशकरंकर्मकृत्वाऽन्यतममिच्छया ।
चरेत्सान्तपनंकृच्छ्रम्प्राजापत्यमनिच्छया ॥१२४॥

संकरापात्रकृत्यासुमासंशोधनमैन्दवम् ।
मलिनीकरणीयेषुतप्तःस्याद्यावकत्र्यहम् ॥१२५॥
तुरीयोब्रह्महत्यायाःक्षत्रियस्यबधेस्मृतः ।
वैश्येऽष्टमांशोवृत्तस्थेशूद्रेज्ञेयस्तुषोडशः ॥१२६॥
अकामतस्तुराजन्यंविनिपात्यद्विजोत्तमः ।
वृषभैकसहस्रागाद्द्यात्सुचरितव्रतः ॥१२७॥
त्र्यब्दंचरेद्वानियतोजटीब्रह्महणोव्रतम् ।
वसन्दूरतरेग्रामाद्वृक्षमूलनिकेतनः ॥१२८॥
एतदेवचरेदब्दम्प्रायश्चित्तन्द्विजोत्तमः ।
प्रमाप्यवैश्यंवृत्तस्थन्दद्याच्चैकशतंगवाम् ॥१२९॥
एतदेवव्रतंकृत्स्नंषण्मासाञ्छूद्रहाचरेत् ।
वृषभैकादशावाऽपिदद्याद्विप्रायगाःसिताः ॥१३०॥
मार्जीरनकुलौहत्वाचाषम्मण्डूकमेवच ।
श्वगोधोलूककाकांश्चशूद्रहत्याव्रतंचरेत् ॥१३१॥
पयःपिवेत्त्रिरात्रंवायोजनंवाऽध्वनोव्रजेत् ।
उपस्पृशेत्स्रवन्त्यांवासूक्तंवाऽब्दैवतंजपेत् ॥१३२॥
अभ्रिंकार्ष्णायसीन्दद्यात्सर्पंहत्वाद्विजोत्तमः ।
पलालभारकंषंढेसैसकंचैकमाषकम् ॥१३३॥

घृतकुम्भंवराहेतुतिलद्रोणन्तुतित्तिरौ ।
शुकेद्विहायनंवत्संक्रौंचंहत्वात्रिहायनम् ॥१३४॥
हत्वाहंसंवलाकांचवकंवर्हिणमेवच ।
वानरंश्येनभासौचस्पर्शयेद्ब्राह्मणायगाम् ॥१३५॥
वासोदद्याद्धयंहत्वापंचनीलान्वृषान्गजम् ।
अजमेषावनड्वाहंखरंहत्वैकहायनम् ॥१३६॥
क्रव्यादांस्तुमृगान्हत्वाधेनुन्दद्यात्पयस्विनीम् ।
अक्रव्यादान्वत्सतरीमुष्ट्रंहत्वातुकृष्णलम् ॥१३७॥
जीनकार्मुकवस्तावीन्पृथग्दद्याद्विशुद्धये ।
चतुर्णामपिवर्णानान्नारीर्हत्वाऽनवस्थिताः ॥१३८॥
दानेनबधनिर्णेकंसर्पादीनामशक्नुवन् ।
एकैकशश्चरेत्कृच्छ्रन्द्विजःपापापनुत्तये ॥१३९॥
अस्थिमतान्तुसत्त्वानांसहस्रस्यप्रमापणे ।
पूर्णेचानस्यनस्थ्नान्तुशूद्रहत्याव्रतंचरेत् ॥१४०॥
किंचिदेवतुविप्रायदद्यादस्थिमताम्बधे ।
अनस्थ्नांचैवहिंसायाम्प्राणायामेनशुध्यति ॥१४१॥
फलदानान्तुवृक्षाणाञ्छेदनेजप्यमृक्शतम् ।
गुल्मवल्लीलतानांचपुष्पितानांचवीरुधाम् ॥१४२॥

अन्नाद्यजानांसत्वानांरसजानांचसर्वशः ।
फलपुष्पोद्भवानांचघृतप्राशोविशोधनम् ॥१४३॥
कृष्टजानामोषधीनांजातानांचस्वयंवने ।
वृथालम्भेऽनुगच्छेद्गान्दिनमेकम्पयोव्रतः ॥१४४॥
एतैर्व्रतैरपोह्यंस्यादेनोहिंसासमुद्भवम् ।
ज्ञानाज्ञानकृतंकृत्स्नंशृणुतानाद्यभक्षणे ॥१४५॥
अज्ञानाद्वारुणीम्पीत्वासंस्कारेणैवशुध्यति ।
मतिपूर्वमनिर्देश्यम्प्राणान्तिकमितिस्थितिः ॥१४६॥
अपःसुराभाजनस्थामद्यभाण्डस्थितास्तथा ।
पंचरात्रम्पिवेत्पीत्वाशंखपुष्पीशृतम्पयः ॥१४७॥
स्पृष्ट्वादत्वाचमदिरांविधिवत्प्रतिगृह्यच ।
शूद्रोच्छिष्टाश्चपीत्वाऽपःकुशवारिपिवेत्त्र्यहम् ॥१४८॥
ब्राह्मणस्तुसुरापस्यगन्धमाघ्रायसोमपः ।
प्राणानप्सुत्रिरायम्यघृतम्प्राश्यविशुध्यति ॥१४९॥
अज्ञानात्प्राश्यविण्मूत्रंसुरासंस्पृष्टमेवच ।
पुनःसंस्कारमर्हन्तित्रयोवर्णाद्विजातयः ॥१५०॥
वपनम्मेखलादण्डोभैक्ष्यचर्य्याव्रतानिच ।
निवर्त्तन्तेद्विजातीनाम्पुनःसंस्कारकर्मणि ॥१५१॥

अभोज्यानान्तुभुक्त्वाऽन्नंस्त्रीशूद्रोच्छिष्टमेवच ।
जग्ध्वामांसमभक्ष्यंचसप्तरात्रंयवान्पिबेत् ॥१५२॥
शुक्तानिचकषायांश्चपीत्वामेध्यान्यपिद्विजः ।
तावद्भवत्यप्रयतोयावत्तन्नव्रजत्यधः ॥१५३॥
विड्वराहखरोष्ट्राणांगोमायोःकपिकाकयोः ।
प्राश्यमूत्रपुरीषाणिद्विजश्चान्द्रायणंचरेत् ॥१५४॥
शुष्काणिभुक्त्वामांसानिभौमानिकवकानिच ।
अज्ञातंचैवशूनास्थमेतदेवव्रतंचरेत् ॥१५५॥
क्रव्यादशूकरोष्ट्राणांकुक्कुटाणांचभक्षणे ।
नरकाकखराणांचतप्तकृच्छ्रंविशोधनम् ॥१५६॥
मासिकान्नन्तुयोऽश्नीयादसमावर्त्तकोद्विजः ।
सर्व्वाण्यहान्युपवसेदेकाहंचोदकेवसेत् ॥१५७॥
ब्रह्मचारीतुयोऽश्नीयान्मधुमांसंकथंचन ।
सकृत्वाप्राकृतंकृच्छ्रंव्रतशेषंसमापयेत् ॥१५८॥
विडालकाकाखूच्छिष्टंजग्ध्वाश्वनकुलस्यच ।
केशकीटावपन्नंचपिबेद्ब्रह्मसुवर्च्चलाम् ॥१५९॥
अभोज्यमन्नन्नात्तव्यमात्मनःशुद्धिमिच्छता ।
अज्ञानभुक्तन्तूत्तार्य्यंशोध्यंवाऽप्याशुशोधनैः ॥१६०॥

एषोऽन्नाद्यादनस्योक्तोव्रतानांविविधोविधिः ।
स्तेयदोषापहर्तॄणांव्रतानांश्रूयतांविधिः ॥१६१॥
धान्यान्नधनचौर्याणिकृत्वाकामाद्द्विजोत्तमः ।
स्वजातीयगृहादेवंकृच्छ्राब्देनविशुध्यति ॥१६२॥
मनुष्याणान्तुहरणेस्त्रीणांक्षेत्रगृहस्यच ।
कूपवापीजलानांचशुद्धिश्चान्द्रायणंस्मृतम् ॥१६३॥
द्रव्याणामल्पसाराणांस्तेयंकृत्वाऽन्यवेश्मतः ।
चरेत्सान्तपनंकृच्छ्रन्तन्निर्यात्यात्मशुद्धये ॥१६४॥
भक्ष्यभोज्यापहरणेयानशय्यासनस्यच ।
पुष्पमूलफलानांचपंचगव्यंविशोधनम् ॥१६५॥
तृणकाष्ठद्रुमाणांचशुष्कान्नस्यगुडस्यच ।
चेलचर्मामिषाणांचत्रिरात्रंस्यादभोजनम् ॥१६६॥
मणिमुक्ताप्रवालानान्ताम्रस्यरजतस्यच ।
अयःकांस्योपलानांचद्वादशाहंकणान्नता ॥१६७॥
कार्पासकीटजोर्णाणान्द्विशफैकशफस्यच ।
पक्षिगन्धौषधीनांचरज्ज्वाश्चैवत्र्यहम्पय ॥१६८॥
एतैर्व्रतैरपोहेतपापंस्तेयकृतन्द्विज ।
अगम्यागमनीयन्तुव्रतैरेभिरपानुदेत् ॥१६९॥

गुरुतल्पव्रतंकुर्याद्रेतःसिक्त्वास्वयोनिषु ।
सख्युःपुत्रस्यचस्त्रीषुकुमारीष्वन्त्यजासुच ॥१७०॥
पैतृष्वसेयीम्भगिनींस्वस्त्रीयाम्मातुरेवच ।
मातुश्चभ्रातुस्तनयांगत्वाचान्द्रायणंचरेत् ॥१७१॥
एतास्तिस्रस्तुभार्यार्थेनोपयच्छेत्तुबुद्धिमान् ।
ज्ञातित्वेनानुपेयास्ताःपततिह्युपयन्नधः ॥१७२॥
अमानुषीषुपुरुषउदक्यायामयोनिषु ।
रेतःसिक्त्वाजलेचैवकृच्छ्रंसान्तंपनंचरेत् ॥१७३॥
मैथुनन्तुसमासेव्यपुंसियोषितिवाद्विजः ।
गोयानेप्सुदिवाचैवसवासाःस्नानमाचरेत् ॥१७४॥
चण्डालान्त्यस्त्रियोगत्वाभुक्त्वाचप्रतिगृह्यच ।
पतत्यज्ञानतोविप्रोज्ञानात्साम्यन्तुगच्छति ॥१७५॥
विप्रदुष्टांस्त्रियम्भर्त्तानिरुन्ध्यादेकवेश्मनि ।
यत्पुंसःपरदारेषुतच्चैनांचारयेद्व्रतम् ॥१७६॥
साचेत्पुनःप्रदुष्येत्तुसदृशेनोपयंत्रिता ।
कृच्छ्रंचान्द्रायणंचैवतदस्याःपावनंस्मृतम् ॥१७७॥
यत्करोत्येकरात्रेणवृषलीसेवनाद्द्विजः ।
तद्भैक्षभुग्जपन्नित्यंत्रिभिर्वर्षैर्व्यपोहति ॥१७८॥

एषाम्पापकृतामुक्ताचतुर्णामपिनिष्कृतिः ।
पतितैःसम्प्रयुक्तानामिमाःशृणुतनिष्कृतीः ॥१७९॥
संवत्सरेणपततिपतितेनसहाचरन् ।
याजनाध्यापनाद्यौनान्नतुयानासनाशनात् ॥१८०॥
योयेनपतितेनैषांसंसर्गंयातिमानवः ।
सतस्यैवव्रतंकुर्यात्तत्संसर्गविशुद्धये ॥१८१॥
पतितस्योदकंकार्यंसपिण्डैर्बान्धवैर्बहिः ।
निन्दितेऽहनिसायाह्नेज्ञात्यृत्विग्गुरुसन्निधौ ॥१८२॥
दासीघटमपाम्पूर्णम्पर्यस्येत्प्रेतवत्पदा ।
अहोरात्रमुपासीरन्नशौचम्बान्धवैःसह ॥१८३॥
निवर्तेरंश्चतस्मात्तुसम्भाषणसहासने ।
दायाद्यस्यप्रदानंचयात्राचैवहिलौकिकी ॥१८४॥
ज्येष्ठताचनिवर्तेतज्येष्ठावाप्यंचयद्धनम् ।
ज्येष्ठांशम्प्राप्नुयाच्चास्ययवीयान्गुणतोऽधिकः ॥१८५॥
प्रायश्चित्तेतुचरितेपूर्णकुम्भमपान्नवम् ।
तेनैवसार्द्धम्प्रास्येयुःस्नात्वापुण्येजलाशये ॥१८६॥
सत्वप्सुतंघटम्प्रास्यप्रविश्यभवनंस्वकम् ।
सर्वाणिज्ञातिकार्याणियथापूर्वंसमाचरेत् ॥१८७॥

एतमेवविधिंकुर्याद्योषित्सुपतितास्वपि ।
वस्त्रान्नपानन्देयन्तुवसेयुश्चगृहान्तिके ॥१८८॥
एनस्विभिरनिर्णिक्तैर्नार्थंकिंचित्सहाचरेत् ।
कृतनिर्णेजनांश्चैवनजुगुप्सेतकर्हिचित् ॥१८९॥
बालघ्नांश्चकृतघ्नांश्चविशुद्धानपिधर्म्मतः ।
शरणागतहन्तॄंश्चस्त्रीहन्तॄंश्चनसंवसेत् ॥१९०॥
येषान्द्विजानांसावित्रीनानूच्येतयथाविधि ।
तांश्चारयित्वात्रीन्कृच्छ्रान्यथाविध्युपनाययेत् ॥१९१॥
प्रायश्चित्तंचिकीर्षन्तिविकर्मस्थास्तुयेद्विजाः ।
ब्रह्मणाचपरित्यक्तास्तेषामप्येतदादिशेत् ॥१९२॥
यद्गर्हितेनार्ज्जयन्तिकर्मणाब्राह्मणाधनम् ।
तस्योत्सर्गेणशुध्यन्तिजप्येनतपसैवच ॥१९३॥
जपित्वात्रीणिसावित्र्याःसहस्राणिसमाहितः ।
मासंगोष्ठेपयःपीत्वामुच्यतेऽसत्प्रतिग्रहात् ॥१९४॥
उपवासकृशन्तन्तुगोव्रजात्पुनरागतम् ।
प्रणतम्परिपृच्छेयुःसाम्यंसौम्येच्छसीतिकिम् ॥१९५॥
सत्यमुक्त्वातुविप्रेषुविकिरेद्यवसंगवाम् ।
गोभिःप्रवर्त्तितेतीर्थेकुर्य्युस्तस्यपरिग्रहम् ॥१९६॥

व्रात्यानांयाजनंकृत्वापरेषामन्त्यकर्मच ।
अभिचारमहीनंचत्रिभिःकृच्छ्रैर्व्यपोहति ॥१९७॥
शरणागतम्परित्यज्यवेदंविप्लाव्यचद्विजः ।
संवत्सरंयवाहारस्तत्पापमपसेधति ॥१९८॥
श्वशृगालखरैर्दष्टोग्राम्यैःक्रव्याद्भिरेवच ।
नराश्वोष्ट्रवराहैश्चप्राणायामेनशुध्यति ॥१९९॥
षष्ठान्नकालतामासंसंहिताजपएववा ।
होमाश्चसाकलानित्यमपांक्त्यानांविशोधनम् ॥२००॥
उष्ट्रयानंसमारुह्यखरयानन्तुकामतः ।
स्नात्वातुविप्रोदिग्वासाःप्राणायामेनशुध्यति ॥२०१॥
विनाऽद्भिरप्सुवाऽप्यार्त्तःशारीरंसन्निवेश्यच ।
सचेलोवहिराप्लुत्यगामालभ्यविशुध्यति ॥२०२॥
वेदोदितानांनित्यानांकर्मणांसमतिक्रमे ।
स्नातकव्रतलोपेचप्रायश्चित्तमभोजनम् ॥२०३॥
हूंकारम्ब्राह्मणस्योक्त्वात्वंकारंचगरीयसः ।
स्नात्वाऽनश्नन्नहःशेषमभिवाद्यप्रसादयेत् ॥२०४॥
ताडयित्वातृणेनापिकण्ठेवाबध्यवाससा ।
विवादेवाविनिर्जित्यप्रणिपत्यप्रसादयेत् ॥२०५॥

अवगूर्य्यत्वब्दशतंसहस्रमभिहत्यच ।
जिघांसयाब्राह्मणस्यनरकम्प्रतिपद्यते ॥२०६॥
शोणितंयावतःपांशून्संगृह्णातिमहीतले ।
तावन्त्यब्दसहस्राणितत्कर्तानरकेवसेत् ॥२०७॥
अवगूर्य्यचरेत्कृच्छ्रमतिकृच्छ्रन्निपातने ।
कृच्छ्रातिकृच्छ्रौकुर्वीतविप्रस्योत्पाद्यशोणितम् ॥२०८॥
अनुक्तनिष्कृतीनान्तुपापानामपनुत्तये ।
शक्तिंचावेक्ष्यपापंचप्रायश्चित्तम्प्रकल्पयेत् ॥२०९॥
यैरभ्युपायैरेनांसिमानवोव्यपकर्षति ।
तान्वोऽभ्युपायान्वक्ष्यामिदेवर्षिपितृसेवितान् ॥२१०॥
त्र्यहम्प्रातस्त्र्यहंसायंत्र्यहमद्यादयाचितम् ।
त्र्यहम्परंचनाश्नीयात्प्राजापत्यंचरन्द्विजः ॥२११॥
गोमूत्रंगोमयंक्षीरन्दधिसर्पिःकुशोदकम् ।
एकरात्रोपवासश्चकृच्छ्रंसान्तपनंस्मृतम् ॥२१२॥
एकैकंग्रासमश्नीयात्त्र्यहाणित्रीणिपूर्ववत् ।
त्र्यहंचोपवसेदन्त्यमतिकृच्छ्रंचरन्द्विजः ॥२१३॥
तप्तकृच्छ्रंचरन्विप्रोजलक्षीरघृतानिलान् ।
प्रतित्र्यहम्पिवेदुष्णान्सकृत्स्नायीसमाहितः ॥२१४॥

यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् ।
पराकोनामकृच्छ्रोऽयंसर्वपापापनोदनः ॥२१५॥
एकैकंह्रासयेत्पिण्डंकृष्णेशुक्लेचवर्द्धयेत् ।
उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणंस्मृतम् ॥२१६॥
एतमेवविधिंकृत्स्नमाचरेद्यवमध्यमे ।
शुक्लपक्षादिनियतश्चरंश्चान्द्रायणंव्रतम् ॥२१७॥
अष्टावष्टौसमश्नीयात्पिण्डान्मध्यन्दिनेस्थिते ।
नियतात्माहविष्याशीयतिचान्द्रायणंचरन् ॥२१८॥
चतुरःप्रातरश्नीयात्पिण्डान्विप्रःसमाहितः ।
चतुरोऽस्तमितेसूर्येशिशुचान्द्रायणंस्मृतम् ॥२१९॥
यथाकथंचित्पिण्डानान्तिस्रोऽशीतीःसमाहितः ।
मासेनाश्नन्हविष्यस्यचन्द्रस्यैतिसलोकताम् ॥२२०॥
एतद्रुद्रास्तथादित्यावसवश्चाचरन्व्रतम् ।
सर्वाकुशलमोक्षायमरुतश्चमहर्षिभिः ॥२२१॥
महाव्याहृतिभिर्होमःकर्तव्यःस्वयमन्वहम् ।
अहिंसासत्यमक्रोधमार्जवंचसमाचरेत् ॥२२२॥
त्रिरह्नस्त्रिर्निशायाश्चसवासाजलमाविशेत् ।
स्त्रीशूद्रपतितांश्चैवनाभिभाषेतकर्हिचित् ॥२२३॥

स्थानासनाभ्यांविहरेदशक्तोऽधःशयीतवा ।
ब्रह्मचारीव्रतीचस्याद्गुरुदेवद्विजार्चकः ॥२२४॥
सावित्रींचजपेन्नित्यम्पवित्राणिचशक्तितः ।
सर्वेष्वेवव्रतेष्वेवम्प्रायश्चित्तार्थमादृतः ॥२२५॥
एतैर्द्विजातयःशोध्याव्रतैराविष्कृतैनसः ।
अनाविष्कृतपापांस्तुमंत्रैर्होमैश्चशोधयेत् ॥२२६॥
ख्यापनेनानुतापेनतपसाऽध्ययनेनच ।
पापकृन्मुच्यतेपापात्तथादानेनचापदि ॥२२७॥
यथायथानरोऽधर्मंस्वयंकृत्वाऽनुभाषते ।
तथातथात्वचेवाहिस्तेनाधर्मेणमुच्यते ॥२२८॥
यथायथामनस्तस्यदुष्कृतंकर्मगर्हति ।
तथातथाशरीरन्तत्तेनाधर्मेणमुच्यते ॥२२९॥
कृत्वापापंहिसन्तप्यतस्मात्पापात्प्रमुच्यते ।
नैवंकुर्याम्पुनरितिनिवृत्त्यापूयतेतुसः ॥२३०॥
एवंसंचिन्त्यमनसाप्रेत्यकर्मफलोदयम् ।
मनोवाङ्मूर्त्तिभिर्नित्यंशुभंकर्मसमाचरेत् ॥२३१॥
अज्ञानाद्यदिवाज्ञानात्कृत्वाकर्मविगर्हितम् ।
तस्माद्विमुक्तिमन्विच्छन्द्वितीयन्नसमाचरेत् ॥२३२॥

यस्मिन्कर्मण्यस्यकृतेमनसःस्यादलाघवम् ।
तस्मिंस्तावत्तपःकुर्याद्यावत्तुष्टिकरम्भवेत् ॥२३३॥
तपोमूलमिदंसर्वन्दैवमानुषकंसुखम् ।
तपोमध्यम्बुधैःप्रोक्तन्तपोऽन्तंवेददर्शिभिः ॥२३४॥
ब्राह्मणस्यतपोज्ञानन्तपःक्षत्रस्यरक्षणम् ।
वैश्यस्यतुतपोवार्तातपःशूद्रस्यसेवनम् ॥२३५॥
ऋषयःसंयतात्मानःफलमूलानिलाशनाः ।
तपसैवप्रपश्यन्तित्रैलोक्यंसचराचरम् ॥२३६॥
औषधान्यगदोविद्यादैवीचविविधास्थितिः ।
तपसैवप्रसिध्यन्तितपस्तेषांहिसाधनम् ॥२३७॥
यद्दुस्तरंयद्दुरापंयद्दुर्गंयच्चदुष्करम् ।
सर्वन्तुतपसासाध्यन्तपोहिदुरतिक्रमम् ॥२३८॥
महापातकिनश्चैवशेषाश्चाकार्य्यकारिणः ।
तपसैवसुतप्तेनमुच्यन्तेकिल्विषात्ततः ॥२३९॥
कीटाश्चाहिपतंगाश्चपशवश्चवयांसिच ।
स्थावराणिचभूतानिदिवंयान्तितपोबलात् ॥२४०॥
यत्किंचिदेनःकुर्वन्तिमनोवाङ्मूर्त्तिभिर्जनाः ।
तत्सर्वंनिर्दहन्त्याशुतपसैवतपोधनाः ॥२४१॥

तपसैवविशुद्धस्यब्राह्मणस्यदिवौकसः ।
इज्याश्चप्रतिगृह्णन्तिकामान्संवर्द्धयन्तिच ॥२४२॥
प्रजापतिरिदंशास्त्रन्तपसैवासृजत्प्रभुः ।
तथैववेदानृषयस्तपसाप्रतिपेदिरे ॥२४३॥
इत्येतत्तपसोदेवामहाभाग्यम्प्रचक्षते ।
सर्वस्यास्यप्रपश्यन्तस्तपसःपुण्यमुत्तमम् ॥२४४॥
वेदाभ्यासोऽन्वहंशक्त्यामहायज्ञक्रियाक्षमा ।
नाशयन्त्याशुपापानिमहापातकजान्यपि ॥२४५॥
यथैधस्तेजसावह्निःप्राप्तन्निर्दहतिक्षणात् ।
तथाज्ञानाग्निनापापंसर्वन्दहतिवेदवित् ॥२४६॥
इत्येतदेनसामुक्तम्प्रायश्चित्तंयथाविधि ।
अतऊर्द्ध्वंरहस्यानाम्प्रायश्चित्तंनिबोधत ॥२४७॥
सव्याहृतिप्रणवकाःप्राणायामास्तुषोडश ।
अपिभ्रूणहणम्मासात्पुनन्त्यहरहःकृताः ॥२४८॥
कौत्संजप्त्वाऽपइत्येतद्वासिष्ठंचप्रतीत्यृचम् ।
माहित्रंशुद्धवत्यश्चसुरापोऽपिविशुध्यति ॥२४९॥
सकृज्जप्त्वास्यवामीयंशिवसंकल्पमेवच ।
अपहृत्यसुवर्णन्तुक्षणाद्भवतिनिर्मलः ॥२५०॥

हविष्यन्तीयमभ्यस्यनतमंहइतीतिच । 
जपित्वापौरुषंसूक्तम्मुच्यतेगुरुतल्पगः ॥२५१॥
एनसांस्थूलसूक्ष्माणांचिकीर्षन्नपनोदनम् । 
अवेत्यृचंजपेदब्दंयत्किंचिदमितीतिवा ॥२५२॥
प्रतिगृह्याप्रतिग्राह्यम्भुक्त्वाचान्नंविगर्हितम् । 
जपंस्तरत्समन्दीयम्पूयतेमानवस्त्र्यहात् ॥२५३॥
सोमारौद्रन्तुबह्वेनामासमभ्यस्यशुध्यति । 
स्रवन्त्यामाचरन्स्नानमर्य्यम्णामितिचत्र्यृचम् ॥२५४॥
अब्दार्द्धमिन्द्रमित्येतदेनस्वीसप्तकंजपेत् । 
अप्रशस्तन्तुकृत्वाऽप्सुमासमासीतभैक्षभुक् ॥२५५॥
मंत्रैःशाकलहोमीयैरब्दंहुत्वाघृतंद्विजः । 
सुगुर्वप्यपहन्त्येनोजप्त्वावानमइत्यृचम् ॥२५६॥
महापातकसंयुक्तोऽनुगच्छेद्गाःसमाहितः । 
अभ्यस्याब्दम्पावमानीर्भैक्षाहारोविशुध्यति ॥२५७॥
अरण्येवात्रिरभ्यस्यप्रयतोवेदसंहिताम् । 
मुच्यतेपातकैःसर्वैःपराकैःशोधितस्त्रिभिः ॥२५८॥
त्र्यहन्तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः । 
मुच्यतेपातकैःसर्वैस्त्रिर्जपित्वाऽघमर्षणम् ॥२५९॥

यथाऽश्वमेधःक्रतुराट्सर्वपापापनोदनः ।
तथाऽघमर्षणंसूक्तंसर्वपापापनोदनम् ॥२६०॥
हत्वालोकानपीमांस्त्रीनश्नन्नपियतस्ततः ।
ऋग्वेदन्धारयन्विप्रोनैनःप्राप्नोतिकिंचन ॥२६१॥
ऋक्संहितांत्रिरभ्यस्ययजुषांवासमाहितः ।
साम्नांवासरहस्यानांसर्वपापैःप्रमुच्यते ॥२६२॥
यथामहाह्रदम्प्राप्यक्षिप्तंलोष्टंविनश्यति ।
तथादुश्चरितंसर्वंवेदेत्रिवृतिमज्जति ॥२६३॥
ऋचोयजूंषिचान्यानिसामानिविविधानिच ।
एषज्ञेयस्त्रिवृद्वेदोयोवेदैनंसवेदवित् ॥२६४॥
आद्यंयत्त्र्यक्षरम्ब्रह्मत्रयीयस्मिन्प्रतिष्ठिता ।
सगुह्योऽन्यस्त्रिवृद्वेदोयस्तंवेदसवेदवित् ॥२६५॥

॥ इतिमानवेधर्मशास्त्रेभृगुप्रोक्तायांसंहितायाम् ॥
॥ एकादशोऽध्यायः ॥



॥ मानवेधर्म्मशास्त्रेभृगुप्रोक्तायांसंहितायांद्वादशोऽध्यायः ॥

चातुर्वर्ण्यस्यकृत्स्नोऽयमुक्तोधर्मस्त्वयाऽनघ ।
कर्मणाम्फलनिर्वृत्तिंशंसनस्तत्त्वतःपराम् ॥१॥
सतानुवाचधर्मात्मामहर्षीन्मानवोभृगुः ।
अस्यसर्वस्यशृणुतकर्मयोगस्यनिर्णयम् ॥२॥
शुभाशुभफलंकर्ममनोवाग्देहसम्भवम् ।
कर्मजागतयोनृणामुत्तमाधममध्यमाः ॥३॥
तस्येहत्रिविधस्यापित्र्यधिष्ठानस्यदेहिनः ।
दशलक्षणयुक्तस्यमनोविद्यात्प्रवर्त्तकम् ॥४॥
परद्रव्येष्वभिध्यानम्मनसाऽनिष्टचिन्तनम् ।
वितथाऽभिनिवेशश्चत्रिविधंकर्ममानसम् ॥५॥
पारुष्यमनृतंचैवपैशुन्यंचापिसर्वशः ।
असम्बद्धप्रलापश्चवाङ्मयंस्याच्चतुर्विधम् ॥६॥
अदत्तानामुपादानंहिंसाचैवाविधानतः ।
परदारोपसेवाचशारीरंत्रिविधंस्मृतम् ॥७॥

मानसम्मनसैवायमुपभुंक्तेशुभाशुभम् ।
वाचावाचाकृतंकर्मकायेनैवचकायिकम् ॥८॥
शरीरजैःकर्म्मदोषैर्यातिस्थावरतान्नरः ।
वाचिकैःपक्षिमृगताम्मानसैरन्त्यजातिताम् ॥९॥
वाग्दण्डोऽथमनोदण्डःकायदण्डस्तथैवच ।
यस्यैतेनिहिताबुद्धौत्रिदण्डीतिसउच्यते ॥१०॥
त्रिदण्डमेतन्निक्षिप्यसर्वभूतेषुमानवः ।
कामक्रोधौतुसंयम्यततःसिद्धिन्नियच्छति ॥११॥
योऽस्यात्मनःकारयितातंक्षेत्रज्ञम्प्रचक्षते ।
यःकरोतितुकर्म्माणिसभूतात्मोच्यतेबुधैः ॥१२॥
जीवसंज्ञोऽन्तरात्माऽन्यःसहजःसर्वदेहिनाम् ।
येनवेदयतेसर्वंसुखन्दुःखंचजन्मसु ॥१३॥
तावुभौभूतसम्पृक्तौमहान्क्षेत्रज्ञएवच ।
उच्चावचेषुभूतेषुस्थितन्तंव्याप्यतिष्ठतः ॥१४॥
असंख्यामूर्तयस्तस्यनिष्पतन्तिशरीरतः ।
उच्चावचानिभूतानिसततंचेष्टयन्तियाः ॥१५॥
पंचभ्यएवमात्राभ्यःप्रेत्यदुष्कृतिनान्नृणाम् ।
शरीरंयातनार्थीयमन्यदुत्पद्यतेध्रुवम् ॥१६॥

तेनानुभूयतायामीःशरीरेणेहयातनाः ।
तास्वेवभूतमात्रासुप्रलीयन्तेविभागशः ॥१७॥
सोऽनुभूयासुखोदर्कान्दोषान्विषयसंगजान् ।
व्यपेतकल्मषोऽभ्येतिताबेवोभौमहौजसौ ॥१८॥
तौधर्मम्पश्यतस्तस्यपापंचातन्द्रितौसह ।
याभ्याम्प्राप्नोतिसम्पृक्तःप्रेत्येहचसुखासुखम् ॥१९॥
यद्याचरतिधर्मंसप्रायशोऽधर्ममल्पशः ।
तैरेवचावृतोभूतैःस्वर्गेसुखमुपाश्नुते ॥२०॥
यदितुप्रायशोऽधर्मंसेवतेधर्म्ममल्पशः ।
तैर्भूतैःसपरित्यक्तोयामीःप्राप्नोतियातनाः ॥२१॥
यामीस्तायातनाःप्राप्यसजीवोवीतकल्मषः ।
तान्येवपंचभूतानिपुनरभ्येतिभागशः ॥२२॥
एतादृष्ट्वाऽस्यजीवस्यगतीःस्वेनैवचेतसा ।
धर्मतोऽधर्मतश्चैवधर्मेदध्यात्सदामनः ॥२३॥
सत्त्वंरजस्तमश्चैवत्रीन्विद्यादात्मनोगुणान् ।
यैर्व्याप्येमान्स्थितोभावान्महान्सर्वानशेषतः ॥२४॥
योयदैषांगुणोदेहेसाकल्येनातिरिच्यते ।
सतदातद्गुणप्रायन्तंकरोतिशरीरिणम ॥२५॥

सत्त्वंज्ञानन्तमोऽज्ञानंरागद्वेषौरजःस्मृतम् ।
एतद्व्याप्तिमदेतेषांसर्वभूताश्रितंवपुः ॥२६॥
तत्रयत्प्रीतिसंयुक्तंकिंचिदात्मनिलक्षयेत् ।
प्रशान्तमिवशुद्धाभंसत्त्वन्तदुपधारयेत् ॥२७॥
यत्तुदुःखसमायुक्तमप्रीतिकरमात्मनः ।
तद्रजोप्रतिघंविद्यात्सततंहारिदेहिनाम् ॥२८॥
यत्तुस्यान्मोहसंयुक्तमव्यक्तंविषयात्मकम् ।
अप्रतर्क्यमविज्ञेयन्तमस्तदुपधारयेत् ॥२९॥
त्रयाणामपिचैतेषांगुणानांयःफलोदयः ।
अग्र्योमध्योजघन्यश्चतम्प्रवक्ष्याम्यशेषतः ॥३०॥
वेदाभ्यासस्तपोज्ञानंशौचमिन्द्रियनिग्रहः ।
धर्मक्रियात्मचिन्ताचसात्त्विकंगुणलक्षणम् ॥३१॥
आरम्भरुचिताऽधैर्यमसत्कार्यपरिग्रहः ।
विषयोपसेवाचाजस्रंराजसंगुणलक्षणम् ॥३२॥
लोभःस्वप्नोऽधृतिःक्रौर्यन्नास्तिक्यम्भिन्नवृत्तिता
याचिष्णुताप्रमादश्चतामसंगुणलक्षणम् ॥३३॥
त्रयाणामपिचैतेषांगुणानांत्रिषुतिष्ठताम् ।
इदंसामासिकंज्ञेयंक्रमशोगुणलक्षणम् ॥३४॥

यत्कर्मकृत्वाकुर्वंश्चकरिष्यंश्चैवलज्जति ।
तज्ज्ञेयंविदुषासर्वन्तामसंगुणलक्षणम् ॥३५॥
येनास्मिन्कर्मणालोकेख्यातिमिच्छतिपुष्कलाम् ।
नचशोचत्यसंपत्तौतद्विज्ञेयन्तुराजसम् ॥३६॥
यत्सर्वेणेच्छतिज्ञातुंयन्नलज्जतिचाचरन् ।
येनतुष्यतिचात्माऽस्यतत्सत्वगुणलक्षणम् ॥३७॥
तमसोलक्षणंकामोरजसस्त्वर्थउच्यते ।
सत्वस्यलक्षणन्धर्म्मःश्रैष्ठ्यमेषांयथोत्तरम् ॥३८॥
येनयांस्तुगुणेनैषांसंसारान्प्रतिपद्यते ।
तान्समासेनवक्ष्यामिसर्वस्यास्ययथाक्रमम् ॥३९॥
देवत्वंसात्विकायान्तिमनुष्यत्वंचराजसाः ।
तिर्यक्त्वंतामसानित्यमित्येषात्रिविधागतिः ॥४०॥
त्रिविधात्रिविधैषांतुविज्ञेयागौणिकीगतिः ।
अधमामध्यमाऽग्र्याचकर्म्मविद्याविशेषतः ॥४१॥
स्थावराःकृमिकीटाश्चमत्स्याःसर्पाःसकच्छपाः ।
पशवश्चमृगाश्चैवजघन्यातामसीगतिः ॥४२॥
हस्तिनश्चतुरंगाश्चशूद्राम्लेच्छाश्चगर्हिताः ।
सिंहाव्याघ्रावराहाश्चमध्यमातामसीगतिः ॥४३॥

चारणाश्चसुपर्णाश्चपुरुषाश्चैवदाम्भिकाः ।
रक्षांसिचपिशाचाश्चतामसीषूत्तमागतिः ॥४४॥
झल्लामल्लानटाश्चैवपुरुषाःशस्त्रवृत्तयः ।
द्यूतपानप्रसक्ताश्चजघन्याराजसीगतिः ॥४५॥
राजानःक्षत्रियाश्चैवराज्ञांचैवपुरोहिताः ।
वादयुद्धप्रधानाश्चमध्यमाराजसीगतिः ॥४६॥
गन्धर्वागुह्यकायक्षाविबुधानुचराश्चये ।
तथैवाप्सरसःसर्वाराजसीषूत्तमागतिः ॥४७॥
तापसायतयोविप्रायेचवैमानिकागणाः ।
नक्षत्राणिचदैत्याश्चप्रथमासात्विकीगतिः ॥४८॥
यज्वानऋषयोदेवावेदाज्योतींषिवत्सराः ।
पितरश्चैवसाध्याश्चद्वितीयासात्विकीगतिः ॥४९॥
ब्रह्माविश्वसृजोधर्मोमहानव्यक्तमेवच ।
उत्तमांसात्विकीमेतांगतिमाहुर्मनीषिणः ॥५०॥
एषसर्वःसमुद्दिष्टस्त्रिप्रकारस्यकर्मणः ।
त्रिविधस्त्रिविधःकृत्स्नःसंसारःसार्वभौतिकः ॥५१॥
इन्द्रियाणाम्प्रसंगेनधर्म्मस्यासेवनेनच ।
पापान्संयान्तिसंसारानविद्वांसोनराधमाः ॥५२॥

यंयांयोनिन्तुजीवोऽयंयेनयेनेहकर्म्मणा ।
क्रमशोयातिलोकेऽस्मिंस्ततत्तत्सर्वन्निबोधत ॥५३॥
बहून्वर्षगणांन्घोरान्नरकान्प्राप्यतत्क्षयात् ।
संसारान्प्रतिपद्यन्तेमहापातकिनस्त्विमान् ॥५४॥
श्वशूकरखरोष्ट्राणांगोऽजाविमृगपक्षिणाम् ।
चण्डालपुक्कशानांचब्रह्महायोनिमृच्छति ॥५५॥
कृमिकीटपतंगानांविड्भुजांचैवपक्षिणाम् ।
हिंस्राणांचैवसत्वानांसुरापोब्राह्मणोव्रजेत् ॥५६॥
लूताऽहिसरटानांचतिरश्चांचाम्बुचारिणाम् ।
हिंस्राणांचपिशाचानांस्तेनोविप्रःसहस्रशः ॥५७॥
तृणगुल्मलतानांचक्रव्यादान्दंष्ट्रिणामपि ।
क्रूरकर्मकृतांचैवशतशोगुरुतल्पगः ॥५८॥
हिंस्राभवन्तिक्रव्यादाःकृमयोऽभक्ष्यभक्षिणः ।
परस्परादिनःस्तेनाःप्रेताऽन्त्यस्त्रीनिषेविणः ॥५९॥
संयोगम्पतितैर्गत्वापरस्यैवचयोषितम् ।
अपहृत्यचविप्रस्वम्भवतिब्रह्मराक्षसः ॥६०॥
मणिमुक्ताप्रबालानिहृत्वालोभेनमानवः ।
विविधानिचरत्नानिजायतेहेमकर्तृषु ॥६१॥

धान्यंहृत्वाभवत्याखुःकांस्यंहंसोजलंप्लवः ।
मधुदंशःपयःकाकोरसंश्वानकुलोघृतम् ॥६२॥
मांसंगृध्रोवपाम्मद्गुस्तैलन्तैलपयःखगः ।
चीरीवाकस्तुलवणम्बलाकाशकुनिर्दधि ॥६३॥
कौशेयन्तित्तिरिर्हृत्वाक्षौमंहृत्वातुदर्दुरः ।
कार्पासतान्तवंक्रौंचोगोधागांवाग्गुदोगुडम् ॥६४॥
छुच्छुन्दरिःशुभान्गन्धान्पत्रशाकन्तुबर्हिणः ।
श्वावित्कृतान्नंविविधमकृतान्नन्तुशल्यकः ॥६५॥
वकोभवतिहृत्वाऽग्निंगृहकारीह्युपस्करम् ।
रक्तानिहृत्वावासांसिजायतेजीवजीवकः ॥६६॥
वृकोमृगेभंव्याघ्रोऽश्वम्फलमूलन्तुमर्कटः ।
स्त्रीमृक्षःस्तोककोवारियानान्युष्ट्रःपशूनजः ॥६७॥
यद्वातद्वापरद्रव्यमपहृत्यबलान्नरः ।
अवश्यंयातितिर्य्यक्त्वंजग्ध्वाचैवाहुतंहविः ॥६८॥
स्त्रियोऽप्येतेनकल्पेनहृत्वादोषमवाप्नुयुः ।
एतेषामेवजन्तूनाम्भार्यात्वमुपयान्तिताः ॥६९॥
स्वेभ्यःस्वेभ्यस्तुकर्मभ्यश्च्युतावर्णाह्यनापदि ।
पापान्संसृत्यसंसारान्प्रेष्यतांयान्तिशत्रुषु ॥७०॥

वान्ताश्युल्कामुखः प्रेतोविप्रोधर्मात्स्वकाच्च्युतः ।
अमेध्यकुणपाशीचक्षत्रियःकटपूतनः ॥७१॥
मैत्राक्षज्योतिकःप्रेतोवैश्योभवतिपूयभुक् ।
चैलाशकश्चभवतिशूद्रोधर्मात्स्वकाच्च्युतः ॥७२॥
यथायथानिषेवन्तेविषयान्विषयात्मकाः ।
तथातथाकुशलतातेषान्तेषूपजायते ॥७३॥
तेऽभ्यासात्कर्मणान्तेषाम्पापानामल्पबुद्धयः ।
सम्प्राप्नुवन्तिदुःखाणितामुतास्विहयोनिषु ॥७४॥
तामिस्रादिषुचोग्रेषुनरकेषुविवर्त्तनम् ।
असिपत्रवनादीनिबन्धनच्छेदनानिच ॥७५॥
विविधाश्चैवसम्पीडाःकाकोलूकैश्चभक्षणम् ।
करम्भबालुकातापान्कुम्भीपाकांश्चदारुणान् ॥७६॥
सम्भवांश्चवियोनीषुदुःखप्रायासुनित्यशः ।
शीतातपाभिघातांश्चविविधानिभयानिच ॥७७॥
असकृद्गर्भवासेषुवासंजन्मचदारुणम् ।
बन्धनानिचकष्टानिपरप्रेष्यत्वमेवच ॥७८॥
बन्धुप्रियवियोगांश्चसंवासंचैवदुर्ज्जनैः ।
द्रव्यार्ज्जनंचनाशंचमित्रामित्रस्यचार्ज्जनम् ॥७९॥

जरांचैवाप्रतीकारांव्याधिभिश्चोपपीडनम् ।
क्लेशांश्चविविधांस्तांस्तान्मृत्युमेवचदुर्जयम् ॥८०॥
यादृशेनतुभावेनयद्यत्कर्म्मनिषेवते ।
तादृशेनशरीरेणतत्तत्फलमुपाश्नुते ॥८१॥
एषसर्वःसमुद्दिष्टःकर्मणांवःफलोदयः ।
नैःश्रेयसंकर्म्मविधिंविप्रस्येमन्निबोधत ॥८२॥
वेदाभ्यासस्तपोज्ञानमिन्द्रियाणांचसंयमः ।
अहिंसागुरुसेवाचनिःश्रेयसकरम्परम् ॥८३॥
सर्वेषामपिचैतेषांशुभानामिहकर्म्मणाम् ।
किंचिच्छ्रेयस्करतरंकर्मोक्तम्पुरुषम्प्रति ॥८४॥
सर्वेषामपिचैतेषामात्मज्ञानम्परंस्मृतम् ।
तद्ध्यग्र्यंसर्वविद्यानाम्प्राप्यतेह्यमृतन्ततः ॥८५॥
षण्णामेषान्तुसर्वेषांकर्म्मणाम्प्रेत्यचेहच ।
श्रेयस्करतरंज्ञेयंसर्वदाकर्म्मवैदिकम् ॥८६॥
वैदिकेकर्म्मयोगेतुसर्वाण्येतान्यशेषतः ।
अन्तर्भवन्तिक्रमशस्तस्मिंस्तस्मिन्क्रियाविधौ ॥८७॥
सुखाभ्युदयिकंचैवनैःश्रेयसिकमेवच ।
प्रवृत्तंचनिवृत्तंचद्विविधंकर्मवैदिकम् ॥८८॥

इहचामुत्रवाकाम्यम्प्रवृत्तंकर्मकीर्त्यते ।
निष्कामंज्ञानपूर्वन्तुनिवृत्तमुपदिश्यते ॥८९॥
प्रवृत्तंकर्मसंसेव्यदेवानामेतिसाम्यताम् ।
निवृत्तंसेवमानंस्तुभूतान्यत्येतिपंचवै ॥९०॥
सर्वभूतेषुचात्मानंसर्वभूतानिचात्मनि ।
समम्पश्यन्नात्मयाजीस्वाराज्यमधिगच्छति ॥९१॥
यथोक्तान्यपिकर्माणिपरिहायद्विजोत्तमः ।
आत्मज्ञानेशमेचस्याद्वेदाभ्यासेचयत्नवान् ॥९२॥
एतद्विजन्मसाफल्यम्ब्राह्मणस्यविशेषतः ।
प्राप्यैतत्कृतकृत्योहिद्विजोभवतिनान्यथा ॥९३॥
पितृदेवमनुष्याणांवेदश्चक्षुःसनातनम् ।
अशक्यंचाप्रमेयंचवेदशास्त्रमितिस्थितिः ॥९४॥
यावेदबाह्याःस्मृतयोयाश्चकाश्चकुदृष्टयः ।
सर्वास्तानिष्फलाःप्रेत्यतमोनिष्ठाहिताःस्मृताः ॥९५॥
उत्पद्यन्तेच्यवन्तेचयान्यतोऽन्यानिकानिचित् ।
तान्यर्वाक्कालिकतयानिष्फलान्यनृतानिच ॥९६॥
चातुर्वर्ण्यंत्रयोलोकाश्चत्वारश्चाश्रमाःपृथक् ।
भूतम्भवद्भविष्यच्चसर्वंवेदात्प्रसिध्यति ॥९७॥

शब्दःस्पर्शश्चरूपश्चरसोगन्धश्चपंचमः ।
वेदादेवप्रसूयन्तेप्रसूतिगुणकर्मतः ॥९८॥
बिभर्त्तिसर्वभूतानिवेदशास्त्रंसनातनम् ।
तस्मादेतत्परम्मन्येयज्जन्तोरस्यसाधनम् ॥९९॥
सैनापत्यंचराज्यंचदण्डनेतृत्वमेवच ।
सर्वलोकाधिपत्यंचवेदशास्त्रविदर्हति ॥१००॥
यथाजातबलोवह्निर्दहत्यार्द्रानपिद्रुमान् ।
तथादहतिवेदज्ञःकर्मजन्दोषमात्मनः ॥१०१॥
वेदशास्त्रार्थतत्वज्ञोयत्रतत्राश्रमेवसन् ।
इहैवलोकेतिष्ठन्सब्रह्मभूयायकल्पते ॥१०२॥
अज्ञेभ्योग्रन्थिनःश्रेष्ठाग्रन्थिभ्योधारिणोवराः ।
धारिभ्योज्ञानिनःश्रेष्ठाज्ञानिभ्योव्यवसायिनः ॥१०३॥
तपोविद्याचविप्रस्यनिःश्रेयसकरम्परम् ।
तपसाकिल्विषंहन्तिविद्ययाऽमृतमश्नुते ॥१०४॥
प्रत्यक्षंचानुमानंचशास्त्रंचविविधागमम् ।
त्रयंसुविदितंकार्यन्धर्मशुद्धिमभीप्सता ॥१०५॥
आर्षन्धर्मोपदेशंचवेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्तेसधर्मंवेदनेतरः ॥१०६॥

नैःश्रेयसमिदंकर्मयथोदितमशेषतः ।
मानवस्यास्यशास्त्रस्यरहस्यमुपदिश्यते ॥१०७॥
अनाम्नातेषुधर्मेषुकथंस्यादितिचेद्भवेत् ।
यंशिष्टाब्राह्मणाब्रूयुःसधर्मःस्यादशंकितः ॥१०८॥
धर्मेणाधिगतोयैस्तुवेदःसपरिवृंहणः ।
तेशिष्टाब्राह्मणाज्ञेयाःश्रुतिप्रत्यक्षहेतवः ॥१०९॥
दशावरावापरिषद्यन्धर्मम्परिकल्पयेत् ।
त्र्यवरावाऽपिवृत्तस्थातन्धर्मंनविचालयेत् ॥११०॥
त्रैविद्योहेतुकस्तर्कीनैरुक्तोधर्मपाठकः ।
त्रयश्चाश्रमिणःपूर्वेपरिषत्स्याद्दशावरा ॥१११॥
ऋग्वेदविद्यजुर्विच्चसामवेदविदेवच ।
त्र्यवरापरिषज्ज्ञेयाधर्मसंशयनिर्णये ॥११२॥
एकोऽपिवेदविद्धर्मंयंव्यवस्येद्द्विजोत्तमः ।
सविज्ञेयःपरोधर्मोनाज्ञानामुदितोऽयुतैः ॥११३॥
अव्रतानाममंत्राणांजातिमात्रोपजीविनाम् ।
सहस्रशःसमेतानाम्परिषत्वंनविद्यते ॥११४॥
यंवदन्तितमोभूतामूर्खाधर्म्ममतद्विदः ।
तत्पापंशतधाभूत्वातद्वक्तॄननुगच्छति ॥११५॥

